## द्रे रो वा ॥ ४ ॥

द्रशब्दे वर्तमानस्य रेफस्य लोपो वा स्यात् । प्राप्तविभाषेयम् । चंदो चंद्रो - चन्द्रः । इंदो इंद्रो - इन्द्रः । णिद्दा णिद्रा - निद्रा । भद्दं भद्रं - भद्रम् ॥ ४ ॥

## सर्वज्ञसदृशेषु ञः ॥ ५ ॥

सर्वज्ञ इत्येवंप्रकारेषु ञकारस्य लोपो नित्यं स्यात् । सव्वज्जो - सर्वज्ञः । देव्वज्जो - दैवज्ञः । दोसज्जो - दोषज्ञः ॥ ५ ॥

## श्मश्रुश्मशानयोरादेः ॥ ६ ॥

अनयोरादिवर्णस्य लोपः स्यात् । मस्सू - श्मश्रुः । मसाणं- श्मशानम् ॥ ६ ॥

## मध्याह्ने हस्य ॥ ७ ॥

अत्र हस्य लोपः स्यात् । मज्झण्णो - मध्याह्नः ॥ ७ ॥

## ह्नह्मां नलमानां स्थितिरूर्ध्वम् ॥ ८ ॥

परिभाषेयम् । ह्नादिसंबन्धिनां नलमानां हकारादूर्ध्वं स्थितिरित्यर्थः । वण्ही - वह्निः । पल्हादो - प्रह्लादः । बम्हणो - ब्राह्मणः । अत्र—'द्रे रो वा' इत्यतो मण्डूकप्लुत्या वाग्रहणमनुवर्तते । तेन यथास्थितमपि—वह्नी ब्रह्मणो इत्यादि प्रयोक्तव्यम् । इदमेव हि प्रयोगेषु दृश्यते—"गाढअरुह्मो गिह्मो अइदीहराइ जोह्ने (?)" इति । अह्माणं - अस्माकम् । तुह्माणं - युष्माकम् इत्यादि ॥ ८ ॥

**युक्तस्य ॥ ९ ॥**

आ परिच्छेदपरिसमाप्तेरधिकारोऽयम् । इत उर्ध्वमनुक्रमिष्यमाणा विधयः संयुक्ताक्षरस्य वेदितव्याः ॥ ९ ॥

**ष्टस्य ठः ॥ १० ॥**

षयुक्तस्य टकारस्य ठकारादेशः स्यात् । अट्ठमी - अष्टमी । विट्ठरं - विष्टरम् । रुट्ठो - रुष्टः । दुट्ठो - दुष्टः ॥ १० ॥

**अस्थनि ॥ ११ ॥**

अत्र युक्तस्य ठः स्यात् । अट्ठी - अस्थि ॥ ११ ॥

**स्तस्य थः ॥ १२ ॥**

अत्र युक्तस्य तकारस्य थकारः स्यात् । अत्थि - अस्ति । सोत्थि - स्वस्ति ॥ १२ ॥

**न स्तम्बे ॥ १३ ॥**

स्तम्बशब्दे सयुक्ततकारस्य थो न स्यात् । उपरिलोपः । तंबो - स्तम्बः ॥ १३ ॥

**स्तम्भे खः ॥ १४ ॥**

अत्र खः स्यात् । खंभो - स्तम्भः ॥ १४ ॥

**स्थाणावहरे ॥ १५ ॥**

अहरवाचिनि स्थाणुशब्दे यद्युक्तं तस्य खः स्यात्। खाणू - स्थाणुः। अहर इति किम्। 'थाणू रक्खदु' इति॥ १५॥

**स्फोटके च॥ १६॥**

अत्रापि खः स्यात्। खोडओ - स्फोटकः॥ १६॥

**र्यशय्याभिमन्युषु जः॥ १७॥**

रेफयुक्तस्य यकारस्य शय्याभिमन्युशब्दस्थयुक्तस्य च जकारादेशः स्यात्। कज्जं - कार्यम्। मज्जाआ - मर्यादा। दुज्जोहणो - दुर्योधनः। सेज्जा - शय्या। अहिमज्जू - अभिमन्युः॥ १७॥

**तूर्यधैर्यसौन्दर्याश्चर्यपर्यन्तेषु रः॥ १८॥**

एषु युक्तानां रेफादेशः स्यात्। तूरं - तूर्यम्। धीरं - धैर्यम्। सुंदेरं - सौन्दर्यम्। अच्छेरं - आश्चर्यम्। पेरंतो - पर्यन्तः॥ १८॥

**सूर्ये वा॥ १९॥**

अत्र रेफो वा स्यात्। सूरो - सूर्यः। पक्षे जः। सुज्जो॥ १९॥

**चौर्यसदृशेषु रिअः॥ २०॥**

एषु रिअ इत्यादेशः स्यात्। चोरिअं - चौर्यम्। सोरिअं - शौर्यम्। युक्तस्यौकारात्परत्वमिह सादृश्यम्। मोरिओ - मौर्यः। कोरिअं - क्रौर्यम्॥ २०॥

**पर्यस्तपर्याणसौकुमार्येषु लः॥ २१॥**

एषु युक्तस्य ळः स्यात् । पळ्ळत्थं - पर्यस्तम् । पळ्ळाणं - पर्याणम् । सोअमळ्ळं - सौकुमार्यम् ॥ २१ ॥

**र्तस्य टः ॥ २२ ॥**

रेफयुक्ततकारस्य टकारः स्यात् । णट्टओ - नर्तकः । वट्टइ - वर्तते ॥ २२ ॥

**पत्तने च ॥ २३ ॥**

पट्टणं - पत्तनम् । चकारोऽनुक्तसमुच्चयार्थः । पट्टिआ - पत्रिका ॥२३॥

**न धूर्तादिषु ॥ २४ ॥**

एषु र्तस्य टो न स्यात् । 'सर्वत्र लवराणाम्' इति रलोपः । धुत्तो - धूर्तः । कत्तरी - कर्त्तरी । कित्ती - कीर्तिः । वत्ता - वार्ता । कत्तिएओ - कार्तिकेयः । मत्तंडो - मार्तण्डः । मुत्तं - मूर्तम् । आवत्तो - आवर्तः । संवत्तो - संवर्तः । वत्तिअं - वार्तिकम् । वत्तिआ - वर्तिका । अत्तो - आर्तः । णिवत्तओ - निवर्तकः । हत्ता - हर्ता । कत्ता - कर्ता । भत्ता - भर्ता एवमादयः । आकृतिगणोऽयम् ॥ २४ ॥

**गर्ते डः ॥ २५ ॥**

अत्र युक्तस्य डः स्यात् । गड्डं - गर्तम् ॥ २५ ॥

**गर्दभसंमर्दवितर्दिविच्छर्दिषु र्दस्य ॥ २६ ॥**

एषु रेफयुक्तस्य दकारस्य डकारः स्यात् । सर्वादेशत्वात् द्वित्वम् । गड्डहो - गर्दभः । संमड्डो - संमर्दः । विअड्डी - वितर्दिः । विच्छड्डो -

विच्छर्दः । "जस्स फुरंते णहप्पहाविच्छड्डे" इति सेतुः । र्दस्येति किम् । विच्छर्दसंमर्दयोर्युक्तछकारस्य मा भूत् ॥ २६ ॥

### त्यथ्यद्यानां चछजाः ॥ २७ ॥

त्यादीनां यथासंख्यं चादयः स्युः । सच्चं - सत्यम् । णिच्चं - नित्यम् । मिच्छा - मिथ्या । पच्छं - पथ्यम् । विज्जा - विद्या । पज्जं - पद्यम् ॥ २७ ॥

### ध्यह्ययोर्झः ॥ २८ ॥

अनयोर्झः स्यात् । मज्झण्णो - मध्याह्नः । सज्झो - सह्यः । सज्झं - साध्यम् । गज्झं - ग्राह्यम् । विंझो - विन्ध्यः । संझा - संध्या । "संझा पणामघडिओ" इति सेतुः । मुज्झइ - मुह्यति इत्यादि ॥ २८ ॥

### स्कष्कक्षाणां खः ॥ २९ ॥

एषां खः स्यात् । भक्खरो - भास्करः । पुक्खरं - पुष्करम् । अक्खरो - अक्षरः ॥ २९ ॥

### अक्ष्यादिषु छः ॥ ३० ॥

खस्यापवादः । अच्छि - अक्षि । छेत्तं - क्षेत्रम् । छमा - क्षमा । छीरं - क्षीरम् । छित्तो - क्षिप्तः । उच्छू - इक्षुः । छारं - क्षारम् । छुअं - क्षुतम् । सरिच्छं - सदृक्षम् । ळच्छी - लक्ष्मीः । कुच्छी - कुक्षिः । मच्छिआ - मक्षिका । वच्छो - वक्षः । मिअच्छी - मृगाक्षी इत्यादि । अत्र क्षमाशब्दपाठस्तितिक्षायामिति केचित् । खमा । क्षान्तिरित्यर्थः । छप्रकरणे मातृ-

पितृभ्यां स्वसुरुपसंख्यानम् —माउच्छा - मातृष्वसा । पिउच्छा - पितृष्वसा । "गामवडस्स पिउच्छा" इति हालः ॥ ३० ॥

**क्ष्मावृक्षक्षणेषु वा ॥ ३१ ॥**

एषु छो वा स्यात् । अप्राप्तविभाषेयम् । खमा छमा - क्ष्मा । रुक्खो वच्छो - वृक्षः । अत्र रुत्वे सत्येव खत्वमित्युक्तम् । खणो छणो - क्षणः ॥ ३१ ॥

**ष्मपक्ष्मविस्मयेषु म्हः ॥ ३२ ॥**

एषु म्ह इत्यादेशः स्यात् । गिम्हो गिह्मो - ग्रीष्मः । उम्हा उह्मा - ऊष्मा । पम्हा पह्मा - पक्ष्मा । विम्हओ विह्मओ - विस्मयः इति ॥ ३२ ॥

**ह्नस्नष्णक्ष्णश्नां ण्हः ॥ ३३ ॥**

युक्तानामेषां ण्ह इत्यादेशः स्यात् । वण्ही वह्नी - वह्निः । ण्हाणं - ह्नाणं - स्नानम् । वेण्हू वेह्णू - विष्णुः । तिण्हं तिह्णं - तीक्ष्णम् । पण्हो पह्णो - प्रश्नः । पण्ही इति च वक्ष्यति ॥ ३३ ॥

**चिह्ने न्धः ॥ ३४ ॥**

अत्र नयुक्तधकारः स्यात् । बाहुलकादादेरपि प्रायोलोपः । इन्धं - चिह्नम् । "सुणह अणुराअइन्धं" इति सेतुः ॥ ३४ ॥

**ष्पस्य फः ॥ ३५ ॥**

स्पष्टम् । पुप्फं - पुष्पम् । सप्फं - शष्पम् । गिप्फई - गीष्पतिः ॥ ३५ ॥

**स्पस्य च ॥ ३६ ॥**

योगविभागो वैचित्र्यार्थः । फंसो - स्पर्शः । फट्ठं - स्पष्टम् । 'ष्पस्पयोः फः' इत्येव सूत्रयितुमुचितम् ॥ ३६ ॥

**बाष्पेऽश्रुणि हः ॥ ३७ ॥**

अश्र्वर्थस्य बाष्पस्य हः स्यात् । बाहो - बाष्पः । "अट्ठिअबाहं पुणो परुण्णं व मुहं" इति सेतुः । अश्रुणि किम् । बप्फो । ऊष्मेत्यर्थः ॥ ३७ ॥

**कार्षापणे च ॥ ३८ ॥**

युक्तस्य हः स्यात् । काहावणं - कार्षापणम् ॥ ३८ ॥

**श्चत्सप्सां छः ॥ ३९ ॥**

युक्तानां त्रयाणामेषां छः स्यात् । पच्छिमं - पश्चिमम् । णिच्छओ - निश्चयः । कुच्छा - कुत्सा । वच्छो - वत्सः । अच्छरा - अप्सराः ॥ ३९ ॥

**वृश्चिके ञ्छः ॥ ४० ॥**

अत्र ञकारवान् छकार आदेशः स्यात् । छापवादः । 'उदिक्षु-वृश्चिकयोः' इत्युत्वम् । विञ्छुओ - वृश्चिकः ॥ ४० ॥

**नोत्सुकोत्सवयोः ॥ ४१ ॥**

अनयोर्युक्तस्य छत्वं न स्यात् । ऊसुओ - उत्सुकः । ऊसवो - उत्सवः ॥ ४१ ॥

**न्मो मः ॥ ४२ ॥**

नकारयुक्तस्य मकारस्य मकार एव स्यात् । अधोलोपापवादः । उम्मत्तो - उन्मत्तः । बम्महो - मन्मथः । जम्मो - जन्म ॥ ४२ ॥

**म्नज्ञपञ्चाशत्पञ्चदशेषु णः ॥ ४३ ॥**

एषु णः स्यात् । णिण्णं - निम्नम् । णाणं - ज्ञानम् । पण्णासो - पञ्चाशत् । पण्णरह - पञ्चदश ॥ ४३ ॥

**तालवृन्ते ण्डः ॥ ४४ ॥**

अत्र युक्तस्य णयुक्तडकार आदेशः स्यात् । तालवुण्डं - तालवृन्तम् ॥ ४४ ॥

**भिन्दिपाले च ॥ ४५ ॥**

स्पष्टम् । भिण्डिवाळो - भिन्दिपालः ॥ ४५ ॥

**विह्वले भो वा ॥ ४६ ॥**

अत्र युक्तस्य भो वा स्यात् । वेब्भळं - विह्वलम् । पक्षे— वलोपः । विहळम् ॥ ४६ ॥

**आत्मनि पः ॥ ४७ ॥**

आत्मशब्दे युक्तस्य पः स्यात् । अप्पा - आत्मा । वेत्येव— अत्ता ॥ ४७ ॥

**क्मस्य च ॥ ४८ ॥**

अस्य च पो वा स्यात् । तिप्पं तिग्गं - तिग्मम् । रुप्पिणी रुग्गिणी - रुक्मिणी ॥ ४८ ॥

## शेषादेशयोर्द्वित्वमनादौ ॥ ४९ ॥

उपर्यादिलोपे सति यः शिष्यते स शेषः । युक्तस्येत्यधिकृत्य यो विहितः स आदेशः । तयोः शेषादेशयोरनादौ वर्तमानयोर्द्वित्वं स्यात् । शेषस्य तावत्—उत्तं - उक्तम् । मुद्धं - मुग्धम् । खग्गो - खड्गः । अग्गी - अग्निः इत्यादि । अत्र सर्वत्र 'परस्य द्वित्वसूचकः' इति पूर्वमुक्तोऽनुस्वारः परस्य द्वित्वं सूचयति । एवमादेशस्यापि । आदेशस्य तावत्—अट्ठमी - अष्टमी । विट्ठरं - विष्टरम् । धुत्तो - धूर्तः । मत्तंडो - मार्तण्डः । अत्थि - अस्ति । सोत्थि - स्वस्ति इत्यादि । अनादाविति किम् । धओ - ध्वजः । सअं - स्वयम् । झाणं - ध्यानम् । फंसो - स्पर्शः इत्यादि ॥ ४९ ॥

## वर्गे युजः पूर्वः ॥ ५० ॥

परिभाषेयं द्वित्वनियमार्था । कादिपञ्चवर्ग्यां युजो द्वितीयस्य च चतुर्थस्य चाक्षरस्य द्वित्वे कर्तव्ये तदपेक्षया पूर्वः प्रथमस्तृतीयश्च पूर्वावयवो भवतीत्यर्थः । पूर्वशब्दस्यावृत्त्यायमर्थो लभ्यते । पेक्खइ - प्रेक्षते । सिग्घं - शीघ्रम् । गिप्फई - गीष्पतिः । वेब्भळं - विह्वलम् । अयुजां त्वयुज एव पूर्वावयवाः । सप्पो - सर्पः । सग्गो - सर्गः । धण्णो - धन्यः । सकारवकारयोस्तु तावेव । कस्सवो - कश्यपः । गव्वो - गर्वः । इदं तु सूत्रं सूत्रक्रमप्राप्तमित्युदाहृतम् । पेक्खइ सिग्घं सप्पो इत्यादि उपर्यधोलोपविधायकशास्त्रप्रवृत्त्या प्रयोगानुसारेण च साध्वेवेति 'वर्गे युजः पूर्वः' इति सूत्रं निष्प्रयोजनमेवेत्यवगन्तव्यम् ॥ ५० ॥

## नीडादिषु च ॥ ५१ ॥

एषु द्वित्वं स्यात् । णेड्डं - नीडम् । पेम्मं - प्रेम । सोत्तो - स्रोतः । वाहित्तं - व्याहृतम् । जण्णू - जानु । जोव्वणं - यौवनम् इत्यादि ॥ ५१ ॥

## आम्रताम्रयोर्बः ॥ ५२ ॥

अनयोर्द्वित्ववान् बकारः स्यात् । अब्बं - आम्रम् । तब्बं - ताम्रम् ॥

## न रहोः ॥ ५३ ॥

शेषत्वे आदेशत्वे च सत्यपि रेफहकारयोर्द्वित्वं न स्यात् । धीरं - धैर्यम् । बाहो - बाष्पः । मुहइ - मुह्यति । णीहादो - निर्ह्रादः ॥ ५३ ॥

## आङो ज्ञस्य ॥ ५४ ॥

आङ उत्तरस्य ज्ञस्य आदेशत्वे सत्यपि द्वित्वं न स्यात् । आणत्ती - आज्ञप्तिः । आणवेइ - आज्ञापयति ॥ ५४ ॥

## समासे वा ॥ ५५ ॥

तत्पुरुषादिसमासे द्वित्वं वा स्यात् । राअपुरिसो राअप्पुरिसो - राजपुरुषः । गिरिगामो गिरिग्गामो - गिरिग्रामः । उवकुंभं उवक्कुंभं - उपकुम्भम् । रामकण्हो रामक्कण्हो - रामकृष्णौ । कअखेमो कअक्खेमो - कृतक्षेमः । " अप्पवसो वि हु सुअणो परव्वसो आहिआईए " इति हालः । " कह विरहप्पडिऊळा होहिइ समुहहिअआ पइम्मि उवगए " इति सेतुः । समासे किम् । गच्छ गामं - गच्छ ग्रामम् । पेच्छ वा साअं - पश्य वा सायम् ॥ ५५ ॥

## सेवादिषु वा ॥ ५६ ॥

एषु द्वित्वं वा स्यात् । सेवा सेव्वा - सेवा । णखो णक्खो - नखः । "णक्खक्खुडिअसरसं महासुरहिअअं" इति सेतुः । तुण्हिओ तुण्हिक्को - तूष्णीकः । विसंभो विस्संभो - विस्रम्भः । दीहो दिग्घो - दीर्घः । दुहिओ दुक्खिओ - दुःखितः । राई रत्ती - रात्रिः । कणिआरो कण्णिआरो - कर्णिकारः । मणे मण्णे - मन्ये । णिहिअं णिहित्तं - निहितम् । ईसरो इस्सरो - ईश्वरः । तइळोअं तइळोक्कं - त्रैलोक्यम् । दइवं देव्वं - दैवम् । एवं एव्वं-एवम् । वीसो विस्सो - विश्वः । वीसासो विस्सासो - विश्वासः । णीसासो णिस्सासो - निःश्वासः । रसी रस्सी - रश्मिः इत्यादि । आकृतिगणोऽयम् । हिओ हिज्जो - ह्यः ॥ ५६ ॥

## विकर्षः ॥ ५७ ॥

अधिकारोऽयम् । इत ऊर्ध्वमा परिच्छेदपरिसमाप्तेर्विकर्षोऽधिक्रियते । संयुक्ताक्षरयोः पृथक्कारो विकर्ष इत्युच्यते । संसक्तमक्षरमक्षरान्तराद्विकर्षतीति कृत्वा तथोच्यते ॥ ५७ ॥

## क्लिष्टश्लिष्टक्रियारत्नशार्ङ्गेषु तत्स्वरः पूर्वस्य॥५८॥

क्लिष्टादिषु पञ्चसु युक्तस्य विकर्षः स्यात् । यो यस्माद्विकृष्यते सोऽपि तत्संबन्धिनं स्वरमचं प्राप्नोति । किळिट्ठं - क्लिष्टम् । सिळिट्ठं - श्लिष्टम् । नन्वत्र क्लिष्टश्लिष्टशब्दयोः प्रत्येकं युक्तद्वयमस्त्येव । तत्र पूर्वस्य विकर्षः नोत्तरस्येति कथं विज्ञायत इति चेत् उच्यते—उत्तरस्य हि 'ष्टस्य ठः' इति विधानसामर्थ्यात् ठकार एवादेशो भवितुमर्हति । अतो विज्ञायते

पूर्वस्येति । किरिआ - क्रिया । रदणं - रत्नम् । सारंगं - शार्ङ्गम् । सारंगं इत्यत्र गकारादाकृष्यमाणो रेफो बिन्दुना सहोत्तरस्वरमवाप्नोति ॥ ५८ ॥

## कृष्णे वा ॥ ५९ ॥

अत्र विकर्षो वा स्यात् । विकर्षे सति पूर्वस्योत्तरसंबन्धी स्वरश्च स्यात् । षकारयोगनिविष्टस्यापि 'तत्स्वरः पूर्वस्य' इत्यस्यानुवृत्तिः । स्वरेण विना हलः स्थातुमशक्यत्वात् । कसणो - कृष्णः । कण्हो वा ॥ ५९ ॥

## असंज्ञायाम् ॥ ६० ॥

कृष्णशब्दस्य यो विकर्ष उक्तः सोऽयमसंज्ञायामेव । नेह—"कण्हो जसोदातणओ जिणादु" (?) इति । योगविभागश्चिन्त्यप्रयोजनः ॥ ६० ॥

## इच्छ्रीह्रीक्लान्तक्लेशम्लानस्वप्नस्पर्शहर्षेषु ॥ ६१ ॥

एषु विकृष्टस्य इकारः स्वरः स्यात् । श्रीह्रियोः पूर्वसूत्रेणैव इत्वं सिद्धम् । 'तत्स्वरः -' इत्यस्यापवादः । क्लान्ताद्यर्थं वचनं शद्वयोरपि ह्रस्वार्थं च । सिरी - श्रीः । हिरी - ह्रीः । किळंतो - क्लान्तः । अत्रान्त्य- युक्तस्य 'नङोर्हलि' इति बिन्दुविधानसामर्थ्यान्न विकर्षः । किळेसो - क्लेशः । मिळाणं - म्लानम् । सिविणो - स्वप्नः । अत्रान्त्यस्य युक्तस्य विकर्षः न पूर्वस्य । 'इदीषत्पक्व-' इत्यादिसूत्रेण इत्वविधानसामर्थ्यात् । पत्न्याश्चेष्यते—पदिणी - पत्नी । परिसो - स्पर्शः । हरिसो - हर्षः ॥ ६१ ॥

## अत्क्ष्माश्लाघयोः ॥ ६२ ॥

अनयोर्विकर्षः स्यात् । विकर्षे सति पूर्वस्य अकारः स्वरः स्यात् । 'तत्स्वरः -' इत्यस्यापवादः । छमा - क्ष्मा । सळाहा - श्लाघा ॥ ६२ ॥

## स्नेहे वा ॥ ६३ ॥

अत्र विकर्षो वा स्यात्। सिणेहो - स्नेहः। अत्र संयुक्तात्परस्य एकारस्यांश इकारः पूर्वाक्षरं प्राप्नोति। विकर्षाभावपक्षे उपरिलोपः। णेहो - स्नेहः ॥ ६३ ॥

## उत् पद्मतन्वीसमेषु ॥ ६४ ॥

पद्मतन्वीसदृशशब्देषु च युक्तस्य विकर्षः। विकृष्टस्य च उकारः स्वरः स्यात्। पदुमं - पद्मम्। पदुमणाहो - पद्मनाभः। तणुई - तन्वी। गरुई - गुर्वी। लहुई - लघ्वी। कडुई - कट्वी। पडुई - पट्वी। मदुई - मृद्वी इत्यादि ॥ ६४ ॥

## ज्यायामीत् ॥ ६५ ॥

ज्याशब्दे विकर्षः स्यात्। विकृष्टस्य च ईकारः स्वरः। जीआ - ज्या। "सज्जीअं विअ जाअं अणोणमंतं वि राम दिट्ठीअ धणुं" इति सेतुः ॥ ६५ ॥

इति रामपाणिवादविरचितायां प्राकृतप्रकाशवृत्तौ
तृतीयः परिच्छेदः ॥

# चतुर्थः परिच्छेदः

## सन्धावचामज्लोपविशेषा बहुलम् ॥ १ ॥

अचां सन्धौ संहितायां विषये अकां लोपविशेषाः । लोपाश्च विशेषाश्चेति द्वंद्वः । लोपा अदर्शनानि । विशेषास्त्वन्यथाभावाः । ते बहुलं स्युः । कृष्ण ऐक्यमिति स्थिते 'ऐत एत्' इत्यैकारस्य एत्वे कृष्ण-शब्दान्त्यस्य अकारस्य लोपः । कण्हेक्कं - कृष्णैक्यम् । वध्वागमनमित्यत्र वधूशब्दस्यान्त्यस्य ऊकारस्यान्यथाभावः । वहुआअमणं - वध्वागमनम् । अन्यथाभावोऽत्र ह्रस्वः । सोऽयमित्यत्र सो अअं सोअं । अत्र प्रति-योगिनि पदे अकारस्य विकल्पेन लोपः । कत्तिएओ - कार्तिकेयः । अत्र इकारस्य लोपाभावः विशेषाभावो वा । वसिट्ठेसि - वसिष्ठर्षिः । अत्र हि संस्कृतशब्दवद्गुण एव । अकारऋकारयोरेत्वविशेषलाभः । महूसवो - महोत्सवः । अत्र पूर्वस्य आकारस्य लोपः । महिंदो - महेन्द्रः । अत्रापि तथा । अय्यउत्तो - आर्यपुत्रः । अत्रोभयोरकारयोरपि लोपाभावः । सर्व-मिदं बहुलग्रहणात्सिध्यति । अकः किम् । अय्ये एहि - आर्ये एहि । अम्मो ओसर - अहो अपसर । बहुलग्रहणादन्ये च विशेषाः । तथाहि— जउणाअडं जउणाडं - यमुनातटम् । कुंभआरो कुंभारो - कुम्भकारः । वाअवीढं वावीढं - पादपीठम् । राअउळं राउळं - राजकुलम् । चंदअळा चंदळा - चन्द्रकला । कर्णपूर इत्यस्य कण्णऊरो कणेउरो कण्णेरो इति

त्रैरूप्यमपि सन्धिकृतम् । सहआरो सहारो - सहकारः । वक्षस्थलमित्यत्र वच्छअळं वच्छेळं - वक्षस्थलम् । "उत्त्खअहिअअगिरिबंधणं वच्छअळं" इति **सेतुः** । दीहअरो दीहरो - दीर्घतरः । जुत्तं इमं जुत्तण्णिमं - युक्तमिदम् ।

सन्धौ विपरिवर्तन्ते यदमी व्यञ्जनाः स्वराः ।
बहुलग्रहणस्यास्य प्रपञ्चः सर्व एव सः ॥ इति ॥ १ ॥

## उदुम्बरे दोर्लोपः ॥ २ ॥

अत्र यो दुकारस्तस्य लोपः स्यात् । असन्धिकार्यत्वादयमारम्भः । अत्र पूर्वसूत्रे वृत्त्यन्तर्गतस्य लोपशब्दस्य पृथगनुवर्तनायोगात्पुनर्लोपग्रहणम् । ओंबरं - उदुम्बरम् । तुण्डरूपत्वादुकारस्य ओकारः ॥ २ ॥

## कालायसे यस्य वा ॥ ३ ॥

यकारस्य लोपो वा स्यात् । बहुलग्रहणस्यायं प्रपञ्चः सन्धिकार्यत्वात् । काळासं काळाअसं - कालायसम् ॥ ३ ॥

## भाजने जस्य ॥ ४ ॥

अत्र जकारस्य लोपो वा स्यात् । भाअणं - भाजनम् । पक्षे प्रायोलोपः । स तु हल्मात्रस्यैव । भाणं ॥ ४ ॥

## यावदादिषु वस्य ॥ ५ ॥

एषु वकारसंघातस्य लोपो वा स्यात् । जा जाव - यावत् । ता ताव - तावत् । चक्काओ चक्कवाओ - चक्रवाकः । देउळं देवउळं - देवकुलम् । एअंविअ एव्वंविअ - एवंविधः । पावारो पारो - प्रावारः । आवट्टमाणो

आइमाणो - आवर्तमानः । अवडो अडो - अवटः । आकृतिगणोऽयम् । माहवो माहो - माधवः । बाहुलकात् णकारस्य लोपः कचित् । महुमहो - महुमहणो । "महुमहहत्थम्मि मए" इति सेतुः ॥ ५ ॥

## अन्त्यहलः ॥ ६ ॥

वेति निवृत्तम् । पदान्त्यस्य हलो नित्यं लोपः स्यात् । इस - ईषत् । सरो - सरस् । तेओ - तेजस् । जसो - यशस् । जाव - यावत् । दाव - तावत् । धनुषो हो वा वाच्यः । धनुषोऽन्त्यहलो हकारादेशो वेत्यर्थः । धणुहं धणुं - धनुः । "राम दिट्ठीअ धणुं" इति सेतुः । "आरोविएण धणुहेण सुबाहुसत्तुं" इति च । पच्छा - पश्चात् । बळा - बलात् । चंदमो - चन्द्रमास् । इंदजी - इन्द्रजित् । पुण - पुनर् इत्यादि ॥ ६ ॥

## स्त्रियामात् ॥ ७ ॥

हल इति पञ्चमी विपरिणमते । स्त्रियां पदान्ताद्धलः परं आत्वं स्यात् । वाआ - वाक् । दिसा - दिक् । ककुहा - ककुप् ॥ ७ ॥

## न विद्युति ॥ ८ ॥

अत्रान्त्यहलः परमात्वं न स्यात् । स्त्रीत्वात्प्राप्तिः । विज्जू - विद्युत् ॥ ८ ॥

## शरदो दः ॥ ९ ॥

शरच्छब्दस्यान्त्यहलो दकारसंघात आदेशः स्यात् । सरओ - शरत् । "उवगओ सरओ" इति सेतुः ॥ ९ ॥

## प्रावृषः सः ॥ १० ॥

अन्त्यहल इत्येव । पाउसो-प्रावृषः ॥ १० ॥

## मो बिन्दुः ॥ ११ ॥

मकाररूपस्यान्त्यहलो बिन्दुरादेशः स्यात् । लोपापवादः । बिन्दो-र्लिपिविन्याससंकेतस्तु 'बिन्दुर्विधीयते' इत्यादिना प्रागेव दर्शितः । रामं कण्हं वणं धणं इति ॥ ११ ॥

## अचि मश्च ॥ १२ ॥

अचि परे मकारस्य मकारः । चकाराद्बिन्दुश्च स्यात् । किमेदं-किं एदं । "अविसारिअवित्थअं अणोणअगहिरं" इति **सेतुः** । "एमेअ तत्थ ण हु काळणमत्थि रूवं" इति **राजशेखरः** । 'अचि वा' इत्येव किं न ब्रूयात् । मैवम् । तथा सति बिन्दुना युक्तेऽन्त्यहलो लोपप्रसङ्गात् । येन नाप्राप्तन्यायेन लोपस्यैव हि बिन्दुरपवादः ॥ १२ ॥

## नङोर्हलि ॥ १३ ॥

नकारङकारयोर्हलि परे बिन्दुः स्यात् । मंदं-मन्दम् । पंती-पङ्क्तिः । हलि किम् । कणअं-कनकम् ॥ १३ ॥

## वक्रादिषु ॥ १४ ॥

एषु बिन्दुः स्याद्धलि परे । वंको-वक्रः । संयुक्ते हलीति वाच्यम् । तेन अभियुक्तेत्यत्र भकारे परे अकारादुपरि बिन्दुर्मा भूत् । अभिउंतो-अभियुक्तः । तंसं-त्र्यश्रम् । अंसू-अश्रु । मंसू-श्मश्रु । फंसो-स्पर्शः ।

सुंकं - शुल्कम् । पडिसुदं - प्रतिश्रुतम् । गुंठी - गृष्टिः । दंसणं - दर्शनम् । माणंसिणी - मनस्विनी । समृद्ध्यादित्वात् आदेरात्वम् । सुंसूसा - शुश्रूषा इत्यादि ॥ १४ ॥

## मांसादिषु वा ॥ १५ ॥

एषु बिन्दुर्वा स्यात् । मंसं मासं - मांसम् । कहं कह - कथम् । "कह विरहप्पडिऊळा" इति **सेतुः** । णूणं - णूण - नूनम् । णवरं - णवर - केवलम् इत्यादि । "तरिउं ण हु णवर इमं" इति **सेतुः** । दाणिं दाणि - इदानीम् । संमुहो समुहो - संमुखः । रामेहिं रामेहि । रामेसुं रामेसु इत्यादि पाक्षिकं बिन्दुमत्त्वमपि मांसादिषु द्रष्टव्यम् ॥ १५ ॥

## रलि तद्वर्गान्त्यः ॥ १६ ॥

रलि परे तस्य रल्संबन्धिनो वर्गस्य योऽन्त्यः स बिन्दोरादेशो वा स्यात् । किञ्च - किं च । अअञ्चंदो अअं चंदो-अयं चन्द्रः । इदण्ठाणं - इदं ठाणं - इदं स्थानम् । रलि किम् । इदं वणं - इदं वनम् । 'नङोर्हलि' इति यो विधिः स पुरस्तादपवादत्वेनैतद्बाधते । दन्ती दंती - दन्ती । पंती - पङ्क्तिः । अअं राआ - अयं राजा । अअं सामी - अयं स्वामी इत्यादौ तु यद्यपि रल्परत्वमस्ति तथापि रेफसकारादीनां वर्ग्यत्वाभावाद्वर्गान्त्य इति न संबध्यते । तथा च वर्गे तदन्त्य इति सूत्रयितुमुचितम् ॥ १६ ॥

## नसान्तप्रावृट्शरदः पुंसि ॥ १७ ॥

नकारान्ताः सकारान्ताः प्रावृट्शरदौ च पुंसि वर्तन्ते । कम्मो - कर्म । जम्मो - जन्म । वम्मो - वर्म । जसो - यशः । तेओ - तेजः । पाउसो - प्रावृट् । सरदो - शरत् । आशंसा यश्चान्त्यस्येति वाच्यम् ।

आशंसाशब्दः पुंसि वर्तते । अस्य घकारश्चान्त्यादेश इत्यर्थः । आसंघो - आशंसा । "तह वि हु से णत्थि जीविए आसंघो" इति **सेतुः** ॥ १७ ॥

## न शिरोनभसी ॥ १८ ॥

एतौ पुंसि न स्तः । 'नसान्त-' इत्यस्यापवादः । सिरं - शिरः । णहं - नभः ॥ १८ ॥

## पृष्ठाक्षिप्रश्नाः स्त्रियां वा ॥ १९ ॥

एते स्त्रियां वा वर्तन्ते । वट्ठी - पृष्ठम् । अत्र ऋकारस्य 'ऋतोऽत्' इत्यकारः । 'आदीतौ बहुलम्' इतीत्वम् । "अत्ता भणामि भणिअं तुम्हाण विपंडरा वट्ठी" इति **हालः** । अच्छी - अक्षि । पण्ही - प्रश्नः । पक्षे—वट्ठो अच्छि पण्हो इति ॥ १९ ॥

## ओदवापयोः ॥ २० ॥

अनयोरुपसर्गयोरोत्वं वा स्यात् । ओवाहिओ अववाहिओ - अवगाहितः । अत्र 'अवाद्गाहेर्वाहः' इति वक्ष्यमाणो वाहादेशः । "ओवाहिअमहिवेढो" इति **सेतुः** । ओणओ अवणओ - अवनतः । अणोणअगहिरं - अनवनतगभीरम् । ओसारिओ अवसारिओ - अपसारितः ॥ २० ॥

## तल्त्वयोर्दात्तणौ ॥ २१ ॥

वेति निवृत्तम् । भावप्रत्यययोः तल् त्व इत्येतयोः क्रमात् दात्तणावित्येतावादेशौ स्तः । धीरदा - धीरता । सूरदा - शूरता । किमर्थमिदम् । '-तो दः' इत्यनेनैव सिद्धम् । एवं तर्हि प्रायोलोपो मा भूदित्येतदर्थमस्तु । धीरत्तणं - धीरत्वम् । सूरत्तणं - शूरत्वम् । "पीणत्तणदुग्गेज्झं" इति **सेतुः** ॥ २१ ॥

## क्त्वा तूणः ॥ २२ ॥

क्त्वाप्रत्ययस्य तूण इत्यादेशः स्यात् । घेत्तूण - गृहीत्वा । मोत्तूण - मुक्त्वा । हंतूण - हत्वा । मंतूण - मत्वा । कथं तर्हि—"पाऊण णिरव-सेसं कुसुमरसं अत्तणो कुसळदाए" इति । अत्र तकारस्य प्रायोलोपादिति गृहाण । तेन काऊण - कृत्वा । सोऊण - श्रुत्वा इत्याद्यपि तथैव । यत्तु काढूण सोढूण इति प्रयुञ्जते तत्प्रामादिकमेव । इअ च इष्यते । करिअ भणिअ इति । गमेर्दुअ च । चात्तूणः । गदुअ गंतूण इत्यादि ॥ २२ ॥

## तृन इरः शीले ॥ २३ ॥

शीलार्थे विहितस्य तृन्प्रत्ययस्य इर इत्यादेशः स्यात् । गमिरो - गन्ता । णमिरो - नन्ता । गव्विरो - गर्विता । "सिहिपिञ्छ कण्णऊरा वहुआ वाहस्स गव्विरी भमइ" इति हालः ॥ २३ ॥

## आल्विअल्लोल्लेल्लवंतेंता मतुपः ॥ २४ ॥

मतुप्प्रत्ययस्य आळू इअल्ल उल्ल इल्ल वंत इंत इत्येते षडादेशाः स्युः । गुणाळू गुणिअळ्ळो गुणुळ्ळो गुणिळ्ळो गुणवंतो गुणिंतो इत्यादि । गुणवानित्यर्थः । तथा—णिद्दाळू णिद्दिअळ्ळो णिद्दुळ्ळो णिद्दिळ्ळो णिद्दावंतो णिद्दिंतो । ळज्जाळू ळज्जिअळ्ळो ळज्जुळ्ळो ळज्जिळ्ळो ळज्जावंतो ळज्जिंतो । विज्जाळू विज्जिअळ्ळो विज्जुळ्ळो विज्जिळ्ळो विज्जावंतो विज्जिंतो इत्यादि । "जोण्हामुत्ताहळिळ्ळं णदमउळिणिहित्तग्गहत्थेहिँ दोहिँ" इति राजशेखरः ॥ २४ ॥

## स्वार्थे को वा ॥ २५ ॥

कप्रत्ययो वा स्यात् । चंदओ चंदो - चन्द्रकः । वुसहओ वुसहो - वृषभकः । कप्रत्ययस्य प्रायोलोपः ॥ २५ ॥

**विद्युत्पीताभ्यां ळः ॥ २६ ॥**

आभ्यां परः स्वार्थे ळकारो वा स्यात् । विज्जुळा विज्जू - विद्युत् । वीअळं वीदं - पीतम् । पीताद्वकारो वेति वाच्यम् । वीदवं इति ॥ २६ ॥

**वृन्दे दो रः ॥ २७ ॥**

वृन्दशब्दे यो दकारस्तस्मात्परः स्वार्थे रेफो वा स्यात् । वुंदरं वुंदं - वृन्दम् । ऋत्वादिषु स्मरणादुकारः ॥ २७ ॥

**स्थितिपरिवृत्तिः ॥ २८ ॥**

वर्णद्वयस्य परस्परस्थानाक्रमणं स्थितिपरिवृत्तिः । सेयमितोऽधिक्रियते ॥ २८ ॥

**करेण्वां रणोः ॥ २९ ॥**

करेणुशब्दे रेफणकारयोः स्थितिपरिवृत्तिः स्यात् । रेफस्थाने णकारः णकारस्थाने रेफश्च प्रयोक्तव्य इत्यर्थः । कणेरू - करेणुः । हलोरित्येव । कणूरे इत्यनिष्टरूपं मा भूत् । करेण्वामिति निर्देशात् स्त्रियामेव । नेह—करेणू - करी ॥ २९ ॥

**आलाने लनोः ॥ ३० ॥**

अत्रानयोः स्थितिपरिवृत्तिः स्यात् । आणाळं - आलानम् । "आणाळक्खंभेसु व बाहुसु||सिळाअळट्ठिएसु णिसण्णे" इति सेतुः ॥ ३० ॥

## बृहस्पतौ बहोर्हयौ ॥ ३१ ॥

अत्र बहोः क्रमात् हकारयकारौ स्तः । 'ऋतोऽत्' इत्यत्वम् । यस्य प्रायोलोपः । हअप्पई - बृहस्पतिः ॥ ३१ ॥

## मलिने लिनोरिलौ वा ॥ ३२ ॥

अत्र लिनयोः इलौ वा स्तः । मइळं मळिणं - मलिनम् । "मइ-ळज्जइ दक्खिणाअणंमि पआओ" इति **सेतुः** ॥ ३२ ॥

## गृहस्य घरोऽपतौ ॥ ३३ ॥

गृहस्य घर इत्यादेशः स्यात् । न तु पतिशब्दे परे । घरं - गृहम् । अपतौ किम् । गहवई - गृहपतिः ॥ ३३ ॥

## दाढादयो बहुलम् ॥ ३४ ॥

दाढादयः शब्दाः दंष्ट्राद्यर्थे बहुलं निपात्यन्ते । दाढा - दंष्ट्रा । "महावराहदाढाभिण्णं" इति **सेतुः** । सिप्पी - शुक्तिः । भुमआ - भ्रूः । गोळा - गोदावरी । "गोळाणइ कच्छवासिणा गरिअ सीघेण" इति **हालः** । धीआ - दुहिता । अम्मकाओ - अस्मदीयः । मिंहआ - मेघः । कंदोट्टं - उत्पलम् । दोग्घट्टो - गजः । थट्ठो - सार्थः । तरट्टी - विदग्धा । कोड्डं - कौतुकम् । चिप्पोळअं - धिक्कारः । डीवं - भयम् । अत्ता - श्वश्रूः । वरिळ्ळं - वस्त्रम् । णिहेळं - नीलम् । वहेणअं - अपूपः । अवहं - उभयम् । वोप्पळं - पूगफलम् । एण्हिं - इदानीम् । वेळूरिअं - वैडूर्यम् । मरथअं - मरतकम् । ळव्वं - लिप्तम् । उव्ळेहडो - लोलुपः । इत्थिआ - स्त्री । ढुळुक्किदो - वञ्चितः । फिडिओ - भ्रष्टः । "फिडिआ सुरसंखोहा" इति

**सेतुः** । हळब्बोळं - कोलाहलः । चक्खणं - भक्षणम् । कुडुंगा - गुहा । मडुंका - ज्योत्स्ना । विड्डिरिळ्ळं - भयंकरम् । सच्छहं - सदृक्षम् । हुत्तं - अभिमुखम् । "सुहहुत्तमणोहरं हिअअं" इति **हालः** । चुक्कं - प्रमादः । सोण्हा स्नुषा । ननु सोण्हाशब्दः किमर्थमिह पठ्यते । यावता 'स्नुषायां ण्हः' इति व्युत्पादित एवेति चेत् सत्यम् । तथाप्यादेरुकारस्य ओकार-सिद्ध्यर्थमिह पाठोऽर्थवान् । न च तुण्डरूपत्वादोत्वं स्यादिति वाच्यम् । इह तस्य लाक्षणिकत्वात् । वच्छोमी - वैदर्भी । वळिळ्ळो-बलीवर्दः । वित्थो वितर्कः । कडप्पो - समूहः । भसळो - भृङ्गः । आकृतिगणोऽयम् । यदाहुः—

> "संस्कृतप्रकृतित्वेन ये न सिद्ध्यन्ति केवलम् ।
> तेषां लक्ष्येषु शब्दानां दाढादित्वं विमृश्यताम् ॥" इति ।

अत्र योगविभागः कर्तव्यः । दाढादयः एतदादयः शब्दा निपात्यन्ते । अविहितलक्षणानां हि निपातः । तथा च पृषोदरादिवदविहितलक्षणाः प्राकृतशब्दाः दाढादिषु द्रष्टव्या इति सूत्रार्थः ॥

**बहुलम्** ॥

अस्मिन् शास्त्रे यानि कार्याणि विधीयन्ते तानि बहुलं स्युरिति सर्वविधिशेषतया बहुलसूत्रार्थः । एवं कृते किं कृतं भवतीति पौरवादि-प्रयोगाः साधवो भवन्तीत्यखिलमवदातम् ॥ ३४ ॥

इति रामपाणिवादविरचितायां प्राकृतप्रकाशवृत्तौ
चतुर्थः परिच्छेदः ।



## पञ्चमः परिच्छेदः

### अत ओत्सौ ॥ १ ॥

अकारान्तस्य पदस्य ओकारोऽन्तादेशः स्यात् सौ परे । 'अलोऽन्त्यस्य' इत्यन्त्यस्य । राम सु इति स्थिते 'अन्त्यहलः' इति सुलोपः । रामो-रामः । कण्हो-कृष्णः । संकरो-शंकरः ॥ १ ॥

### जश्शसोर्लोपः ॥ २ ॥

अकारान्तात्परयोः जश्शसोर्लोपः स्यात् । बाहुलकात्सर्वादेशः । 'जस्ङस्याम्सु दीर्घः' इति वक्ष्यमाणेन दीर्घः । रामा चिट्ठंति-रामास्तिष्ठन्ति । कण्हा चिट्ठंति - कृष्णास्तिष्ठन्ति । 'द्विवचने बहुवचनम्' इति वक्ष्यमाणत्वात् द्विवचनमप्येवंरूपमेव । दुवे रामा चिट्ठंति-द्वौ रामौ तिष्ठतः ॥ २ ॥

### अतोऽमः ॥ ३ ॥

अतः अम इति पदच्छेदः । अकारान्तात्परस्यामो लोपः स्यात् । 'आदेः परस्य' इत्यकारस्य लोपः । मकारस्य बिन्दुः । रामं पेच्छ-रामं पश्य । शसि तु 'ए च सुपि' इति वक्ष्यति । तेन एत्वम् । चकाराद्दीर्घश्च । रामे रामा वा पेच्छ - रामान् पश्य । रामकण्हे रामकण्हा वा पेच्छ - रामकृष्णौ पश्य ॥ ३ ॥

## टामोर्णः ॥ ४ ॥

टा इति तृतीयैकवचनम् । आमिति षष्ठीबहुवचनम् । अनयोर्णः स्यात् । 'ए च सुपि' इत्येत्वम् । रामेण - रामेण । बिन्दुर्वा । रामेणं । 'जस् ङस्यां -' इति दीर्घः । रामाण रामाणं ॥ ४ ॥

## भिसो हिः ॥ ५ ॥

अदन्तादुत्तरस्य भिसो हिः स्यात् । 'ए च सुपि' इत्येत्वम् । रामेहि - रामैः । बिन्दुर्वा । रामेहिं ॥ ५ ॥

## ङसेरादोदुह्यः ॥ ६ ॥

अदन्तादुत्तरस्य ङसेः आ दो दु हि एते चत्वार आदेशाः स्युः । जस् ङस्यां-' इति दीर्घः । रामा रामादो रामादु रामाहि - रामात् ॥६॥

## भ्यसो हिंतो सुंतो ॥ ७ ॥

अदन्तात्परस्य भ्यस एतौ स्तः । 'ए च सुपि' इत्येत्वम् । चकार-समुच्चितो दीर्घः । रामाहिंतो रामासुंतो आगदो - रामेभ्य आगतः ॥ ७ ॥

## स्सो ङसः ॥ ८ ॥

अदन्तात्परस्य ङसः संयुक्तसकारद्वयमादेशः स्यात् । उपरिलोपः । 'शेषादेशयोः -' इति द्वित्वम् । तत्सूचकोऽनुस्वारः । रामस्स - रामस्य । कण्हस्स - कृष्णस्य ॥ ८ ॥

## ङेरे म्मि ॥ ९ ॥

अदन्तात्परस्य ङेः ए म्मि इत्यादेशौ स्तः । रामे रामम्मि - रामे । हंतव्वम्मि दहमुहे' इति सेतुः ॥ ९ ॥

## सुपः सु ॥ १० ॥

अदन्तात्परस्य सुपः सुकारादेशः स्यात् । 'ए च सुपि' इत्येत्वम् । रामेसु रामेसुं - रामेषु । ननु किमर्थमिदमुच्यते । येन कश्चिदपि विशेषो नोपलभ्यते । मैवम् । द्विवचनस्यापि सुरेव यथा स्यादित्ययमारम्भः । न च 'द्विवचनस्य बहुवचनम्' इत्यनेनैव तत्रापि सुर्भविष्यतीति वाच्यम् । अतिदेशो ह्ययम् । तेन अन्यत्राविहितस्यातिदेष्टुमशक्यत्वात् । रामळक्ख-णेसु - रामलक्ष्मणेषु ॥ १० ॥

## जस्ङस्याम्सु दीर्घः ॥ ११ ॥

एष्वतो दीर्घः स्यात् । उदाहृतमिदम् ॥ ११ ॥

## ए च सुपि ॥ १२ ॥

सुपीति प्रत्याहारः । न तु सप्तमीबहुवचनमात्रम् । अकारान्तस्य सुपि परे एत्वं स्यात् । अस्यैव पुरस्तादपवादो जस्ङस्यामिति दीर्घविधिः । यथासंभवमुदाहृतं चेदम् ॥ १२ ॥

## क्वचित् ङसिङ्योर्लोपः ॥ १३ ॥

अदन्तस्य क्वचिल्लोपः स्यात् ङसिङ्योः परतः । एत्वदीर्घयोरपवादः । रामा । रामे । रूपे न कश्चिद्विशेषः । मतान्तरप्रदर्शनमात्रमेतत् । दोदु-हिम्मिसु यद्यपि विशेषोऽस्ति तथाप्यनभिधानान्न प्रयोगः ॥ १३ ॥

## इदुतोः शसो णो ॥ १४ ॥

इकारान्तादुकारान्ताच्च परस्य शसो णो इत्ययमादेशः स्यात् । अग्गिणो पेच्छ - अग्नीन् पश्य । बाउणो पेच्छ - वायून् पश्य ॥ १४ ॥

## ङसो वा ॥ १५ ॥

इदुद्भ्यामुत्तरस्य ङसो णो वा स्यात् । अग्गिणो इदं - अग्नेः इदम् । वाउणो इदं - वायोः इदम् । पक्षे—वक्ष्यमाणमोत्वम् । अग्गओ इदं । वाअओ इदं ॥ १५ ॥

## जस ओ वा चात्वम् ॥ १६ ॥

अत्र चकारो भिन्नक्रमः जस इत्यस्यानन्तरं द्रष्टव्यः । इदुद्भ्यां परस्य जसो ङसश्च ओत्वं वा स्यात् । तत्संनियोगेन इदुतोरकारश्चान्तादेशः स्यात् । अग्गओ चिट्ठंति - अग्नयः तिष्ठन्ति । वाअओ चिट्ठंति- वायवः तिष्ठन्ति । पक्षे—अग्गिणो वाउणो चिट्ठंति । ङसि तु उदाहृतम् । 'शेषोऽदन्तवत्' इति वक्ष्यमाणेनातिदेशेन जसि 'जश्शसोर्लोपः' इति लोपे अग्गी चिट्ठंति । वाऊ चिट्ठंति इति । अत्र इदुतोर्दीर्घः । ङसि—अग्गिस्स इदं । वाउस्स इदं । अमि—अग्गी पेच्छ । वाऊ पेच्छ । ङौ—अग्गिम्मि वट्टइ । वाउम्मि वट्टइ । ङसौ—अग्गीदो अग्गीदु अग्गीहि । वाऊदो वाऊदु वाऊहि । भिसि—अग्गीहिं वाऊहिं । भ्यसि— अग्गीहिंतो । वाऊहिंतो इत्यादि रूपाणि भवन्ति ॥ १६ ॥

## टा णा ॥ १७ ॥

इदुद्भ्यां परस्य टा इत्यस्य णा इत्यादेशः स्यात् । अग्गिणा - अग्निना । वाउणा - वायुना ॥ १७ ॥

इदुतोरेषु परतो दीर्घः स्यात् । सौ—अग्गी एसो । वाऊ एसो । सामिद्धी । पाडिप्पद्धी । भिसि—अग्गीहि । वाऊहि । सुपि—अग्गीसु । वाऊसु । एषु किम् । अग्गिणा । वाउणा ॥ १८ ॥

## जसो वा स्त्रियामुदोतौ ॥ १९ ॥

इदुतोरिति निवृत्तम् । आदीदूदन्तानां सामान्येनायं विधिः । नातोऽदातौ' इति निषेधज्ञापकात् । स्त्रियां जस उत् ओत् इत्यादेशौ वा स्तः । माळाउ होंति । माळाओ होंति । पक्षे—माळा होंति । रमाउ रमाओ होंति । पक्षे—रमा होंति । णईउ होंति । णईओ होंति । पक्षे—णई होंति । वहूउ होंति । वहूओ होंति । पक्षे—वहू होंति ॥ १९ ॥

## अमि ह्रस्वः ॥ २० ॥

स्त्रियामादीदूतां अमि परे ह्रस्वः स्यात् । माळं पेच्छ । णइं पेच्छ । वहुं पेच्छ ॥ २० ॥

## टाङसिङस्ङीनामिदुददादेतः ॥ २१ ॥

नेह यथासंख्यम् । विधेयानुवाद्यानां विषमसंख्यात्वात् । टा ङसि ङस् ङि इत्येतेषां चतुर्णाम् इत् उत् अत् आत् एत् इति प्रत्येकं पञ्च आदेशाः स्युः स्त्रियां विषये । णईइ णईउ णईअ णईआ णईए इति । एवं वहूइ इत्यादि । नद्या कृतम् । नद्या आगतम् । नद्याः स्वम् । नद्यां वसतीति क्रमादर्थेषु प्रयोज्यम् । ङेरमपीष्यते—माळाअं णईअं वहूअं इति ॥ २१ ॥

## नातोऽदातौ ॥ २२ ॥

आकारान्तात्परमेषां टादीनां चतुर्णामदातौ न स्तः । माळाइ माळाउ माळाए इति त्रीण्येव रूपाणि ॥ २२ ॥

## आदीतौ बहुलम् ॥ २३ ॥

स्त्रियामात्वमीत्वं च बहुलं स्यात् । वसमाणा वसमाणी । सुवअणा सुवअणी । सामळा सामळी । छउळ्ळा छउळ्ळी । सुंदरा सुंदरी इत्यादि ॥ २३ ॥

## नपुंसके सोर्बिन्दुः ॥ २४ ॥

अत्र सोर्बिन्दुः स्याद्बहुलम् । वणं । धणं । बहुलग्रहणात् दहिं दहि । महुं महु इति ॥ २४ ॥

## ई जश्शसोर्दीर्घश्च ॥ २५ ॥

नपुंसके जश्शसोरीकारादेशो बहुलं स्यात् । तत्संनियोगेन पूर्वस्याचो दीर्घश्च । वणाई होंति । महूई होंति । वणाई पेच्छ । महूई पिब । बहुलग्रहणाद्ध्रस्वश्च । वणाइ होंति । महूइ होंति । वणाइ पेच्छ । महूइ पिब । महूइं इत्यपि मांसादित्वाद्बिन्दुविकल्पः ॥ २५ ॥

## नामन्त्रणे सावोत्वदीर्घबिन्दवः ॥ २६ ॥

पुंस्त्रीनपुंसकानां क्रमादोत्वदीर्घबिन्दवो न स्युः आमन्त्रणे सौ परे । हे राम । हे गौरि । हे वण ॥ २६ ॥

## आत ए ॥ २७ ॥

स्त्रियामात एत्वं स्यादामन्त्रणे सौ परे । हे माळे । आतः किम् । हे वहु ॥ २७ ॥

## ईदूतोर्ह्रस्वः ॥ २८ ॥

पित्रादीनामाकारोऽन्तादेशः स्यात्सौ परे। चात् अरः। पिदा पिदरो। भादा भादरो। जामादा जामादरो चिट्ठइ ॥ ३३ ॥

**राज्ञः ॥ ३४ ॥**

राजन्शब्दस्याकारोऽन्तादेशः स्यात्सौ परे। 'अन्त्यहलः' इति सुलोपः। राआ - राजा ॥ ३४ ॥

**आमन्त्रणे बिन्दुर्वा ॥ ३५ ॥**

स्पष्टम्। हे राअं। हे राआ ॥ ३५ ॥

**जश्शस्ङसां णो वा ॥ ३६ ॥**

राजन्शब्दादुत्तरेषामेषां णो वा स्यात्। 'णो णमोः-' इत्यात्वम्। राआणो चिट्ठंति। राआ चिट्ठंति। राआणो पेच्छ। राआ पेच्छ। ङसि—'इदद्वित्वे' इतीत्वम्। राइणो इदं। 'ङसश्च-' इति द्वित्वम्। रण्णो इदम्। 'शेषोऽदन्तवत्' इति स्सादेशश्च। राअस्स ॥ ३६ ॥

**आमो णः ॥ ३७ ॥**

वेति निवृत्तम्। राजन्शब्दात् आमो ण इत्यादेशः स्यात्। राआण। बिन्दुर्वा - राआणं ॥ ३७ ॥

**टा णा ॥ ३८ ॥**

अस्मात् टा इत्यस्य णा स्यात्। राइणा। रण्णा ॥ ३८ ॥

**ङसश्च द्वित्वं जलोपश्च ॥ ३९ ॥**

राजन्‌शब्दात्परस्य ङसश्चाकारात् टा इत्यस्य च णादेशत्वं प्राप्तस्य द्वित्वं स्यात् । तत्संनियोगेन जकारलोपश्च । रण्णो इदं । रण्णा किदं ॥ ३९ ॥

## इदद्वित्वे ॥ ४० ॥

राजन्‌शब्दस्य टाङसोरद्वित्वयोः परत इकारोऽन्तादेशः स्यात् । राउणा राइणा । अद्वित्वे किम् । रण्णा रण्णो ॥ ४० ॥

## णोणमोरादङसि ॥ ४१ ॥

राजन्‌शब्दस्याकारोऽन्तादेशः स्यात् णो णमोः परतः । ङसादेशस्तु यो णो तस्मिन्परे न । राआणो राआणं । अङसीति किम् । राइणो रण्णो । 'णो णमोः -' इत्यत्र णंग्रहणेन ज्ञायते षष्ठीबहुवचनं बिन्दुमदपीति । अस्यैव च ज्ञापकस्य सामान्यापेक्षत्वाश्रयणेन रामेहिं रामेसुं वणाइं इत्यादौ वैकल्पिकबिन्दुमत्त्वे सिद्धे मांसादित्वकल्पनक्लेशो न कर्तव्य इत्यवधेयः ॥ ४१ ॥

## आत्मनोऽप्पणो वा ॥ ४२ ॥

आत्मन्‌शब्दस्य अप्पण इत्यदन्त आदेशो वा स्यात् । अप्पणो - आत्मा । अप्पणं - आत्मानम् । अप्पणस्स - आत्मन इत्यादि । पक्षे— 'आत्मनि पः' इति पाक्षिकः पादेशः । अप्पा अत्ता इति ॥ ४२ ॥

## इत्वद्वित्ववर्जं राजवदनादेशे ॥ ४३ ॥

अप्पणादेशाभावे आत्मन्‌शब्दस्य राजन्‌शब्दस्येव रूपं स्यात् इत्वद्वित्वे वर्जयित्वा । अप्पा अत्ता । अप्पाणो अत्ताणो । अप्पणा अत्तणा ।

अप्पणो अत्तणो । अनादेशे किम् । अप्पणो चिट्ठइ । अप्पणेण अप्पणस्स इत्यादि रामवत् ॥ ४३ ॥

## ब्रह्मादयोऽप्येवम् ॥ ४४ ॥

स्पष्टम् । बम्हा बम्हणो । उम्हा उम्हणो । बह्मणो उह्मणो ॥ ४४ ॥

## सर्वादेर्जस ए ॥ ४५ ॥

एतदादेर्जस एत्वं स्यात् । सव्वे पुव्वे अण्णे एक्के के दे जे इमे एदे इत्यादि ॥ ४५ ॥

## ङे स्सिम्मित्थाः ॥ ४६ ॥

सर्वादेः परस्य ङेङ्क्त्विववन्तः स्सिम्मित्थाः स्युः । सव्वस्सि सव्वम्मि सव्वत्थ । अण्णस्सि अण्णम्मि अण्णत्थ । जस्सि जम्मि जत्थ । तस्सि तम्मि तत्थ ॥ ४६ ॥

## इदमेतत्किंयत्तद्भ्यष्ट इणा वा ॥ ४७ ॥

एभ्यष्टा इत्यस्य इणा वा स्यात् । इमिणा एदिणा किणा जिणा तिणा । पक्षे—इमेण एदेण केण जेण तेण इत्यादि ॥ ४७ ॥

## आम एसिं ॥ ४८ ॥

इदमादिभ्य आम एसिं इत्यादेशो वा स्यात् । इमेसिं एदेसिं केसिं जेसिं तेसिं । पक्षे—इमाणं एदाणं काणं जाणं ताणं इति । बिन्दुं विनापि—काण जाण ताण इत्यादि ॥ ४८ ॥

## किंयत्तद्भ्यो ङस आसः ॥ ४९ ॥

एभ्यो ङस आस इत्यादेशो वा स्यात् । "एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति परिभाषया इदमेतदौ विना किंयत्तदामनुवर्तनायोगात्तेषां पुनर्ग्रहणम् । कास । जास । तास । पक्षे—कस्स । जस्स । तस्स इत्यादि ॥ ४९ ॥

## ईतः स्सास्से ॥ ५० ॥

ईत इति स्त्रीप्रत्ययस्यानुकरणम् । किंयत्तद्भ्यो ङसः स्सा स्से इत्यादेशौ वा स्तः स्त्रियाम् । किस्सा किस्से । जिस्सा जिस्से । तिस्सा तिस्से । पक्षे—कीए जीए तीए इत्यादि ॥ ५० ॥

## ङेर्हिः ॥ ५१ ॥

किमादिभ्यो ङेर्वा हिः स्यात् । कहि । जहि । तहि । बिन्दुर्वा—कहिं । जहिं । तहिं । पक्षे—कस्सिं जस्सिं तस्सिं इत्यादि ॥५१॥

## आहे इया च काले ॥ ५२ ॥

किमादिभ्यो ङेः आहे इआ इत्यादेशौ वा स्तः काले वाच्ये । काहे । जाहे । ताहे । कइआ । जइआ । तइआ । काले किम् । कस्सि पुरिसे । पक्षे—स्सिम्मित्थादयः ॥ ५२ ॥

## त्तो दो ङसेः ॥ ५३ ॥

वेति निवृत्तम् । किमादिभ्यो ङसेः त्तो दो इत्यादेशौ स्तः । कत्तो कदो । जत्तो जदो । तत्तो तदो ॥ ५३ ॥

## तद ओ ॥ ५४ ॥

ङसेरित्येव । तदः परस्य ङसेः ओत्वं स्यात् । बाहुलकात्तच्छब्दस्य टिलोपः । तो । "तो ते कइ माअंगे" इति सेतुः ॥ ५४ ॥

## ङसा वा से ॥ ५५ ॥

तच्छब्दस्य ङसा सह से इत्यादेशो वा स्यात् । से धणं । तास धणं वा ॥ ५५ ॥

## आमा सिं ॥ ५६ ॥

तच्छब्दस्यामा सह सिं इत्यादेशो वा स्यात् । सिं धणं । ताण धणं ॥ ५६ ॥

## किमः कः ॥ ५७ ॥

किंशब्दस्य क इत्यादेशो नित्यं स्यात्सुब्विषये । को कं केण कातो कस्स कस्सिं इत्यादि ॥ ५७ ॥

## इदम इमः ॥ ५८ ॥

इदंशब्दस्य इमादेशः स्यादुक्तविषये । इमो इमे इमं इमेण इमस्स इमस्सिं ॥ ५८ ॥

## स्सस्सिमोरद्वा ॥ ५९ ॥

अनयोः परयोरिदमः स्थाने अकारः स्यात् । बाहुलकात्सर्वादेशः । अस्स इमस्स, । वेत्येव । अस्सिं इमस्सिं ॥ ५९ ॥

**ङेर्दैन हः ॥ ६० ॥**

इदमो दकारेण सह ङेर्हकारः स्याद्वा । इह । पक्षे—अस्सिं इमस्सिं इमम्मि ॥ ६० ॥

**न त्थः ॥ ६१ ॥**

इदमः स्सिम्मित्थेषु मध्ये त्थ इत्यादेशो न स्यात् । इह । अस्सिं इमस्सिं । इमम्मि ॥ ६१ ॥

**नपुंसके स्वमोरिदमिणमिणमो ॥ ६२ ॥**

इदमः क्लीबे इदं इणं इणमो इति त्रय आदेशाः स्युः स्वमोः परतः । इदं इणं इणमो कुळं । इदमादेशः किमर्थः । स्थानिनोऽपि तथारूपत्वात् । सत्यम् । प्रायोलोपस्य बाधनार्थमिति गृहाण ॥ ६२ ॥

**एतदः सावोत्वं वा ॥ ६३ ॥**

अस्य सौ-परे ओत्वं वा स्यात् । एस एसो ॥ ६३ ॥

**त्तो ङसेः ॥ ६४ ॥**

एतच्छब्दात्परस्य ङसेः त्तो इत्यादेशो वा स्यात् । एत्तो । पक्षे—एआदो एआदु एआहि ॥ ६४ ॥

**तोत्थयोस्तलोपः ॥ ६५ ॥**

एतच्छब्दस्य यस्तकारस्तस्य लोपः स्यात्तोत्थयोः परतः । त्यदाद्यत्वे कृत एवायं लोपः प्रवर्तते । एत्तो एत्थ । पक्षे—एआदो एआदु इत्यादि ॥ ६५ ॥

**तदेतदोः सस्सावनपुंसके ॥ ६६ ॥**

अनयोस्तकारस्य सः स्यान्नित्यमनपुंसके सौ परतः । सो एसो । सा एसा । अनंपुसके किम् । तं एदं ॥ ६६ ॥

**अदसो दोर्मुः ॥ ६७ ॥**

अद:शब्दसंबन्धिनो दकारस्य मुकारः स्यादक्लीबे सौ परतः । 'सुभिस्सुप्सु' इति दीर्घः । अमू पुरिसो । अमू वहू ॥ ६७ ॥

**हश्च सौ ॥ ६८ ॥**

साविति वर्तमाने पुनः सुग्रहणम् '-अनंपुसके' इति विशेषणस्य निवृत्त्यर्थम् । तेन नपुंसकेऽप्यदसो दस्य हः स्यात्सौ परे । चकारात् मुश्च । अह पुरिसो । अह वहू । अह कुळं इति । चकारप्रापितमुत्वमपि त्रिलिङ्ग्यां भवति । अमू पुरिसो । अमू वहू । अमुं कुळं इति ॥ ६८ ॥

**पदस्य ॥ ६९ ॥**

अधिकारोऽयम् । द्विशब्दविधेः प्रागनुक्रमिष्यमाणा विधयः पदस्य वेदितव्याः । 'सुप्तिङन्तं पदम्' इति यत्पदं तदिह गृह्यते । तेन सुबन्तस्यैव स्थाने विधास्यमाना आदेशा भवन्ति ॥ ६९ ॥

**युष्मदस्तुं तुवं सौ ॥ ७० ॥**

सौ परे यद्युष्मत्पदं तस्य तुं तुवं इत्यादेशौ स्तः । तुं गच्छ । तुवं गच्छ ॥ ७० ॥

**तुममम्मि च ॥ ७१ ॥**

अमन्तस्य युष्मत्पदस्य तुममित्यादेशः स्यात्। चकारात्स्वन्तस्य च। तुमं भणामि। तुमं भण ॥ ७१ ॥

**तुज्झे तुम्हे जसि ॥ ७२ ॥**

जसन्तस्य युष्मत्पदस्यैतावादेशौ स्तः। तुज्झे तुम्हे भणइ ॥७२॥

**वो च शसि ॥ ७३ ॥**

शसन्तस्य युष्मत्पदस्य वो इत्यादेशः स्यात्। वो भणामि। चात्पूर्वोक्तमपि। तुज्झे तुम्हे भणामि ॥ ७३ ॥

**टाङ्योस्तइ तुए तुमे तुमए ॥ ७४ ॥**

टान्तस्य ङ्यन्तस्य च युष्मत्पदस्यैते स्युः। तइ तए तुमे तुमए कअं ठिअं वेति संबन्धः। "माआ घरो व अरणं अज्ज खु णत्तित्ति साहिअं तुमए" इति हालः ॥ ७४ ॥

**ङसि तुवतुमतुहतुम्हतुज्झतुब्भाः ॥ ७५ ॥**

ङसन्तस्य युष्मत्पदस्यैते स्युः। तुव तुम तुह तुम्ह तुज्झ तुब्भ धणं इति संबन्धः ॥ ७५ ॥

**आङि च ते दे ॥ ७६ ॥**

आङिति टासंज्ञा प्राचाम्। आङन्तस्य युष्मत्पदस्यैतौ स्तः। चकारात् ङसन्तस्य च। ते दे कअं धणं वा इति संबन्धः ॥ ७६ ॥

**तुमाइ ॥ ७७ ॥**

अयमप्याङन्तस्यादेशः स्यात् । तुमाइ कअं इति ॥ ७७ ॥

**तुज्झेहि तुम्हेहि भिसि ॥ ७८ ॥**

भिसन्तस्य युष्मत्पदस्यैतौ स्तः । तुज्झेहि तुम्हेहि कअं इति ॥७८॥

**ङसौ तत्तो तइत्तो तुमादो तुमादु तुमाहि॥७९॥**

ङसन्तस्य युष्मत्पदस्यैते स्युः । तत्तो तइत्तो तुमादो तुमादु तुमाहि आगअं इति ॥ ७९ ॥

**तुम्हाहिंतो तुम्हासुंतो भ्यसि ॥ ८० ॥**

भ्यसन्तस्य युष्मत्पदस्यैतौ स्तः। तुम्हाहिंतो तुम्हासुंतो अण्णो ॥८०॥

**वो हो तुज्झाणं तुम्हाणमामि ॥ ८१ ॥**

आमन्तस्यैते स्युः । वो हो तुज्झाणं तुम्हाणं तुज्झाण तुम्हाण वा धणं ॥ ८१ ॥

**ङौ तुमस्सि तुमम्मि ॥ ८२ ॥**

ङ्यन्तस्यैतौ स्तः । तुमस्सि । बिन्दुर्वा—तुमस्सिं । तुमम्मि ठिअं । अत्र बिन्दुर्नेष्टः ॥ ८२ ॥

**तुज्झेसु तुम्हेसु सुपि ॥ ८३ ॥**

सुबन्तस्य युष्मत्पदस्यैतौ स्तः । तुज्झेसु तुज्झेसुं तुम्हेसु तुम्हेसुं ठिअं ॥ ८३ ॥

**अस्मदो हमहमहअं सौ ॥ ८४ ॥**

स्वन्तस्यास्मत्पदस्यैते स्युः । हं वड्ढामि । अहं वड्ढामि । अहअं वड्ढामि ॥ ८४ ॥

**मिरमि च ॥ ८५ ॥**

अमन्तस्यास्मत्पदस्यैष आदेशः स्यात् । चात्स्वन्तस्य च । मि पेच्छ । मि वड्ढामि ॥ ८५ ॥

**मं ममं च ॥ ८६ ॥**

अमन्तस्यैतौ भवतः । मं पेच्छ वच्छ । ममं पेच्छ वच्छ ॥ ८६ ॥

**अम्हे जस्शसोः ॥ ८७ ॥**

जसन्तस्य शसन्तस्य च पदस्य अम्हे इत्यादेशः स्यात् । अम्हे वड्ढामो । अम्हे पेच्छ ॥ ८७ ॥

**आङि मे ममाइ ॥ ८८ ॥**

आङन्तस्यैतौ स्तः । मे कअं । ममाइ कअं ॥ ८८ ॥

**ङौ च मइ मए ॥ ८९ ॥**

ङ्यन्तस्यैतौ स्तः । चकारादाङन्तस्य च । मइ मए ठिअं । मइ मए कअं ॥ ८९ ॥

**अम्हेहि भिसि ॥ ९० ॥**

भिसन्तस्यास्मत्पदस्यायमादेशः स्यात् । अम्हेहि अम्हेहिं कअं ॥९०॥

**मत्तो मइत्तो ममादो ममादु ममाहि ङसौ॥९१॥**

ङस्यन्तस्यैते पञ्च आदेशाः स्युः। मत्तो मइत्तो ममादो ममादु ममाहि आगअं इति संबन्धः॥ ९१॥

**अम्हाहिंतो अम्हासुंतो भ्यसि॥ ९२॥**

भ्यसन्तस्यैतौ स्तः। अम्हाहिंतो अम्हासुंतो आगअं इति॥ ९२॥

**मे मम मह मज्झ ङसि॥ ९३॥**

ङसन्तस्यैते चत्वार आदेशाः स्युः। मे मम मह मज्झ धणं इति॥ ९३॥

**णो अम्ह अम्हाण अम्हे आमि॥ ९४॥**

आमन्तस्यैते चत्वार आदेशाः स्युः। णो अम्ह अम्हाण अम्हे धणं। बिन्दुर्वा—अम्हाणं धणं इति॥ ९४॥

**ममस्सि ममम्मि ङौ॥ ९५॥**

ङ्यन्तस्यैतौ स्तः। ममस्सि ममम्मि ठिअं। बिन्दुर्वा—ममंस्सि ठिअं इति॥ ९५॥

**अम्हेसु सुपि॥ ९६॥**

सुबन्तस्यास्मत्पदस्यायमादेशः स्यात्। अम्हेसु ठिअं। बिन्दुर्वा—अम्हेसुं ठिअं इति॥ ९६॥

**द्वेर्दो॥ ९७॥**

पदस्येति निवृत्तम्। द्विशब्दस्य दो इत्यादेशः स्यात्। 'द्विवचनस्य बहुवचनम्' इत्यतिदेशेन प्राप्तयोः जश्शसोः 'जश्शसोर्लोपः' इति सूत्रेण

लोपः । दो भुआ दो भुए पेच्छ । दो इति सर्वासु विभक्तिषु परतः स्यादेव । दोहिं भुआहिं भुएहिं । दोहिंतो भुआहिंतो । दोह्णं भुआणं । दोसुं भुएसुं इति ॥ ९७ ॥

## दुवे वेण्णि वा ॥ ९८ ॥

द्विशब्दस्यैतौ वा स्तः । दुवे भुआ वेण्णि भुआ होंति । दुवे भुआ वेण्णि भुआ पेच्छ । दुवेहिं वेण्णिहिं इत्यादि । पक्षे—दो दोहिं इत्यादि ॥ ९८ ॥

## त्रेस्ती ॥ ९९ ॥

त्रिशब्दस्य ती इत्यादेशः स्यात् । तीहिं तीहिंतो तीणं तीसुं इति ॥

## तिण्णि जश्शस्भ्याम् ॥ १०० ॥

त्रिशब्दस्य जश्शस्भ्यां सह तिण्णि इत्यादेशः स्यात् । तिण्णि पुरिसो तिण्णि वहूओ तिण्णि कुळाइ होंति । तिण्णि पेच्छ ॥ १०० ॥

## चतुरश्चत्तारो चत्तारि ॥ १०१ ॥

चतुर्शब्दस्य जश्शस्भ्यां सहैतौ स्तः । चत्तारो चत्तारि पुरिसा होंति । चत्तारो चत्तारि पेच्छ ॥ १०१ ॥

## एषामामो ण्हः ॥ १०२ ॥

द्विशब्दत्रिशब्दचतुर्शब्दानामामो ण्ह इत्यादेशः स्यात् । दोण्हं तिण्हं चउण्हं धणं इति ॥ १०२ ॥

## शेषोऽदन्तवत् ॥ १०३ ॥

इकारोकारादीनां विशेषेणानुक्तादेशानां यः शेषो विधिः सोऽदन्तवदकारान्तादीनामिवेति सूत्रार्थः । अग्गी चिट्ठंति । वाऊ भमंति । अग्गीहि । वाऊहि । अग्गीदो । वाऊदो । अग्गिस्स । वाउस्स । अग्गिम्मि । वाउम्मि । माळाहिं । माळाहिंतो । वहूहिं । वहूहिंतो । ससिं । ससिस्स । राअस्स । विदुस्स इत्यादि ॥ १०३ ॥

**ङसिङ्योर्नादेतौ ॥ १०४ ॥**

अनदन्तानामदन्तवद्भावे ङसिङ्योर्यथासंख्यमादेतौ न स्तः । अग्गीदो । अग्गिम्मि । वाऊदो । वाउम्मि ॥ १०४ ॥

**आ भ्यसि ॥ १०५ ॥**

अनदन्तानामदन्तवद्भावे भ्यसन्तस्य आत्वं न स्यात् । अग्गीहिंतो । अग्गीसुंतो । वाऊहिंतो । वाऊसुंतो । कुमारीहिंतो । अनदन्तानामित्यादि किम् । रामाहिंतो ॥ १०५ ॥

**द्विवचनस्य बहुवचनम् ॥ १०६ ॥**

अतिदेशोऽयं व्याख्यानाद्द्विवचनस्य बहुवचनवत्कार्यं स्यादित्यर्थः । दुवे अग्गिणो होंति । दुवे पुरिसो होंति । दुवे वहूओ होंति ॥ १०६ ॥

**चतुर्थ्याः षष्ठी ॥ १०७ ॥**

चतुर्थ्याः षष्ठ्या इव कार्यम् । कण्हस्स णमो । रामस्स णमो । पव्वदीपरमेसराणं णमो । हरिहरविरिंचाणं णमो । णमो गोबम्हणाणं इति ॥ १०७ ॥

इति रामपाणिवादविरचितायां प्राकृतप्रकाशवृत्तौ
पञ्चमः परिच्छेदः ।

## अथ षष्ठः परिच्छेदः

**ततिपोरिदेतौ ॥ १ ॥**

त इति तङादिभूतस्य ग्रहणम् । तिपा साहचर्यात् । तस्य तिपश्च इत् एत् इत्येतावादेशौ स्तः । भासइ भासए - भासते । तकारस्य प्रायोलोपः । गच्छइ - गच्छति ॥ १ ॥

**सिप्थासोः सि से ॥ २ ॥**

अनयोरेतावादेशौ स्तः प्रत्येकम् । गच्छसि गच्छसे । वड्ढसि वड्ढसे ॥ २ ॥

**इण्मिपोर्मिः ॥ ३ ॥**

अनयोर्मिरित्यादेशः स्यात् । वड्ढामि । गच्छामि ॥ ३ ॥

**न्तिहत्थमोमुमा बहुषु ॥ ४ ॥**

पुरुषत्रयबहुवचनेष्वेते आदेशाः स्युः । प्रथमपुरुषबहुवचने—न्ति । मध्यमपुरुषबहुवचने—ह थ । शेषास्त्रय उत्तमपुरुषबहुवचन इति विवेकः । जणा होंति । तुम्हे होह होथ । अम्हे होमो होमु होम । बहुषु किम् । अहं होमि ॥ ४ ॥

## अत ए से ॥ ५ ॥

ततिपोः सिप्थासोश्चेत्यादेशेनैतौ अकारान्तादेव नान्येभ्य इति नियमार्थोऽयमारम्भः । गच्छए । वड्ढसिए । 'शेषाणामदन्तता' इत्यनयोरदन्तत्वम् । अतः किम् । करेइ । करेसि । वड्ढेइ । वड्ढेसि । देइ । देसि । 'लादेशे वा' इत्येत्वम् ॥ ५ ॥

## अस्तेर्लोपः ॥ ६ ॥

'सिप्थासोः' इतीह परसप्तमीत्वेनानुवर्तते । तत्र सिपि परतोऽस्तेर्लोपः स्यात् । अस्तेः परस्मैपदित्वेन थासोऽसंभवात् सिमात्रस्य ग्रहणम् । तुवं सि । अग्गी सि । वाऊ सि ॥ ६ ॥

## मिमोमुमादेशानां होऽधश्च ॥ ७ ॥

हः अधः इति च्छेदः । मि मो मु म इति ये आदेशा विहिताः तेषामधो हकारः स्यात् । चकारात् अस्तेर्लोपश्च । अहं म्हि । अहं म्हो । अहं म्हु । अहं म्ह ॥ ७ ॥

## यक ईअइज्जौ ॥ ८ ॥

'सार्वधातुके यक्' इति कर्मणो विहितस्य यक ईअ इज्ज इत्यादेशौ स्तः । गणीअइ गणिज्जइ - गण्यते । भणीअइ भणिज्जइ - भण्यते । दीअइ दिज्जइ - दीयते । सहीअइ सहिज्जइ - सह्यते । गण्हीअइ गण्हिज्जइ - गृह्यते ॥ ८ ॥

## नान्त्यद्वित्वे ॥ ९ ॥

'गमादीनां द्वित्वं वा' इति यदा भवत्यन्त्यद्वित्वं तदा नैतावादेशौ स्तः। गम्मइ - गम्यते। रम्मइ - रम्यते। अन्त्यद्वित्वमिति किम्। गमीअइ गमिज्जइ ॥ ९ ॥

## न्तमाणौ शतृशानचोः ॥ १० ॥

अनयोः क्रमात् न्तमाणावादेशौ स्तः। हसंतं देवदत्तं पेच्छ। हसंतस्स देवदत्तस्स। हसंते देवदत्ते। हसमाणं देवदत्तं पेच्छ। हसमाणस्स देवदत्तस्स। हसमाणे देवदत्ते इति ॥ १० ॥

## ई च स्त्रियाम् ॥ ११ ॥

स्त्रियां शतृशानचोरी स्यात्। चकारात्पूर्वोक्तावपि। हसई। हसंती। हसमाणी। वसई। वसंती। वसमाणी ॥ ११ ॥

## धातोर्भविष्यति हिः ॥ १२ ॥

भविष्यत्कालवाचिनि प्रत्यये परे धातोः परो हिकारः प्रयोक्तव्य इति सूत्रार्थः। होहिइ - भविष्यति। होहिसि - भविष्यसि। "कह विरहप्पडिऊळा होहिइ-" इति सेतुः ॥ १२ ॥

## उत्तमे स्साहौ च ॥ १३ ॥

भविष्यत्युत्तमे धातोः परतः स्सा हा इत्येतौ स्तः। चात् हि च। होस्सामि होहामि होहिमो - भविष्यामि। होस्सामो होहामो होहिमि- भविष्यामः ॥ १३ ॥

## मिना स्सं वा ॥ १४ ॥

भविष्यति मिना सह स्सं वा स्यात् । भविस्सं । गमिस्सं । पक्षे—होहिमि ॥ १४ ॥

## मोमुमैर्हिस्सा हित्था ॥ १५ ॥

भविष्यत्युत्तमे मो मु म-—एतैः सह हिस्सा हित्था—एतौ स्तः । होहिस्सा होहित्था । गमिहिस्सा गमिहित्था । पक्षे—होहिमि इत्यादि ॥ १५ ॥

## कृदाश्रुवचिगमिरुदिदृशिरूपाणां काहंदाहं-सोच्छंवोच्छंगच्छंरोच्छंदच्छमः ॥ १६ ॥

सप्तानामेषां क्रमात्सप्तैते आदेशाः स्युर्भविष्यति काले । काहं-करिष्यामि । दाहं-दास्यामि । सोच्छं-श्रोष्यामि । वोच्छं-वक्ष्यामि । गच्छं-गमिष्यामि । रोच्छं-रोदिष्यामि । दच्छं-द्रक्ष्यामि । रूपग्रहणं सादृश्यार्थमित्युक्तम् । तेन मोच्छं-मोक्ष्यामि । भोच्छं-भोक्ष्यामि इत्याद्यूह्यम् । उत्तम इत्येव—काहिइ-दाहिइ ॥ १६ ॥

## श्र्वादीनां त्रिष्वनुस्वारवर्जं हिलोपश्च वा ॥१७॥

कृदादीनां सूत्रे श्र्वादीनां पञ्चानां सोच्छादयः पञ्चादेशाः अनुस्वारं वर्जयित्वा भविष्यति काले पुरुषत्रयेऽपि वा स्युः । तत्संनियोगेन हिलोपश्च । श्रोष्यति—सोच्छिइ सोच्छिसि-सोच्छिमि । वक्ष्यति—वोच्छिइ वोच्छिसि वोच्छिमि इत्यादि । पक्षे—सोहिइ । वच्छिहि इत्यादि ॥ १७ ॥

## उ सु मु विध्यादिष्वेकस्मिन् ॥ १८ ॥

पुरुषत्रयेऽपि विध्यादिष्वर्थेषु क्रमादेकवचने उ सु मु इत्यादेशाः स्युः। स होउ - स भवतु। तुवं होसु - त्वं भव। अहं होमु - अहं भवानि। मध्यमैकवचने हि चेष्यते। तुवं होहि। कथं तर्हि "तह वड्ढ भअवइ णिसे जह से कळ्ळं चिअ ण होइ" इत्यत्र वड्ढेति मध्यमपुरुषैकवचन-प्रयोगः। उच्यते—पूर्वसूत्राद्वाग्रहणमनुवर्त्य व्यवस्थितविभाषात्वेन व्याख्ये-यम्। तथा च प्रथमोत्तमयोर्नित्यं मध्ये तु विभाषायाम्। एतेन "उव णिच्चळणिप्पंद" इत्याद्यपि सिद्धम्। एकस्मिन् इति ग्रहणं स्पष्टार्थम्। उत्तरसूत्रे बहुष्वित्यनेनैव गतार्थत्वात्॥ १८॥

## न्तु ह मो बहुषु॥ १९॥

विध्यादिष्वर्थेषु पुरुषत्रयेऽपि वचनेषु न्तु ह मो इति क्रमात्स्युः। ते होंतु - ते भवन्तु। तुम्हे होह - यूयं भवथ। अम्हे होमो—वयं भवामः। विध्यादिष्वित्यनेन लोड्लिड्लिङाशीर्लिङो गृह्यन्ते॥ १९॥

## वर्तमानभविष्यदनद्यतनयोश्च ज्यज्जौ वा॥ २०॥

वर्तमाने भविष्यदनद्यतने चकाराद्विध्यादौ च ज्य ज्ज इत्यादेशौ वा स्तः। भवतु भवेद्वा भवतु वा - होज्य। अत्र यकारलोपो न उच्चारणसामर्थ्यात्। होज्ज। पक्षे - होइ होहिइ होदु। "कह मिण्णे होज्ज जाणा रसोणुणआ" इति **सेतुः**। अनद्यतन इति किम्। अज्ज होहिइ॥ २०॥

## नानेकाचः॥ २१॥

अनेकाचो धातोः परे ज्यज्जौ न स्तः। वड्ढेइ। वड्ढिहिइ। वड्ढेदु॥ २१॥

## ईअ भूते ॥ २२ ॥

भूतेऽर्थे प्रथमपुरुषैकवचनस्य ईअ इत्यादेशो वा स्यात् । भुवीअ । भणीअ । कुणीअ । वड्ढीअ । पक्षे—भुवइ भणइ कुणइ वड्ढइ ॥ २२ ॥

## एकाचो हीअ ॥ २३ ॥

पूर्वसूत्रस्यापवादः । एकाचो धातोर्हीअ इत्यादेशो वा स्यात् । होहीअ । सोहीअ । पक्षे—होइ सुणाइ ॥ २३ ॥

## अस्तेरासिः ॥ २४ ॥

अस्तेर्भूते आसि इत्यादेशः स्यात् । आसि राआ जहिट्ठिलो । आसि दासरही रामो । प्रायेण वर्तमानप्रत्यया एव भूते भवन्ति । अभूत्-होहीइ । अगमत्-गच्छइ । "अह पेच्छइ ळक्खणओ" "जप्पइ रिक्खाहिवई" "आभासइ सुग्गीओ" इत्यादिषु अपश्यत् अजल्पत् आभाषित इत्यादि छाया ॥ २४ ॥

## णिच एदादेरात् ॥ २५ ॥

णिच्प्रत्ययस्य एत्वं स्यात् । तत्संनियोगेन धातोरादेरात्वं च स्यात् । कारेइ । धारेइ । गामेइ । भामेइ ॥ २५ ॥

## आवे च ॥ २६ ॥

णिच आवे इत्यादेशः स्यात् । चकारादेत्वं च । हसावेइ । वसावेइ । वृड्ढावेइ । हासेइ । वासेइ । वड्ढेइ ॥ २६ ॥

## आविः क्तभावकर्मसु वा ॥ २७ ॥

क्त इति सप्तम्या लुक् सौत्रः। क्तप्रत्यये भावे कर्मणि च परे णिच आवि इत्यादेशो वा स्यात्। हसाविअं। वसाविअं। हासिअं। वासिअं। हसाविज्जइ। वसाविज्जइ। हासिज्जइ। वासिज्जइ। भणाविज्जइ। भणिज्जइ॥ २७॥

**नैदावे॥ २८॥**

क्ते भावकर्मणोश्च परत एत् आवे इत्येतौ णिच आदेशौ न स्तः। हासिअं हासिज्जइ। एषु किम्। हासाइ। वासेइ। हासावेइ॥ २८॥

**अत आ मिपि वा॥ १९॥**

अकारान्तस्य धातोर्मिपि परे आत्वं वा स्यात्। भणामि। भणमि। वड्ढामि। वड्ढमि। अतः किम्। हरेमि। करेमि॥ २९॥

**इच्च बहुषु॥ ३०॥**

धातोरुत्तमपुरुषबहुवचन अत इकारः स्यात्। चकारादात्वं च। हसिमो हसामो। पणमिमो पणमामो। मण्णिमो मण्णामो। मिप्संबन्धादुत्तमपुरुषबहुवचन एव इत्यायाति। नेह—हसंति। हसह॥ ३०॥

**क्ते॥ ३१॥**

धातोः क्तप्रत्यये परतोऽत इत्वं स्यात्। हसिअं। वडिअं। भणिअं। सुविअं। अतः किम्। दिण्णं। रुण्णम्॥ ३१॥

**ए च क्त्वातुमुंस्तव्यभविष्यत्सु॥ ३२॥**

एषु परतो धातोरत एत्वं स्यात्। चकारात् इत्वं च। भणेऊण भणिऊण। हसेऊण हसिऊण। हसेउं हसिउं। हसेअव्वं हसिअव्वं। हसेहिइ हसिहिइ ॥ ३२ ॥

## लादेशे वा ॥ ३३ ॥

लादेशास्तिप्शतृशानचः। तेषु परतो धातोरत एत्वं वा स्यात्। हसेइ हसइ। मुणेइ मुणइ। भणेइ भणइ। भणाइ इत्यात्वमपि केचिदाहुः। मुणेइ मुणइ मुणाइ। हसेंतो हसंतो। हसेमाणो हसमाणो। अतः किम्। भाइ। दाइ। तृच इत्तओ वक्तव्यः। गण्हित्तओ - गृहीता। पावइत्तओ - प्रापयिता। रक्खित्तओ - रक्षिता ॥ ३३ ॥

इति रामपाणिवादकृतायां प्राकृतप्रकाशवृत्तौ
षष्ठः परिच्छेदः।

## सप्तमः परिच्छेदः

### भुवो होभुवौ ॥ १ ॥

प्रकृत्यादेशा आरभ्यन्ते । भवतेर्धातोः हो भुव इत्योतावादेशौ स्तः । होइ होसि होमि होंति होह होमो । भुवइ भुवंति ॥ १ ॥

### क्ते भूः ॥ २ ॥

होभुवोरपवादः । क्तप्रत्यये परतो भवतेर्भू इत्येव स्यात् । भूअं ॥२॥

### प्रादेर्भवः ॥ ३ ॥

उपसर्गादुत्तरस्य भवतेर्भव इत्यादेशः स्यात् । पभवइ - प्रभवति । संभवइ - संभवति । परिभवइ - परिभवति । उब्भवइ - उद्भवति ॥ ३ ॥

### त्वरस्तुवरः ॥ ४ ॥

"ञित्वरा संभ्रमे" । अस्य धातोः तुवर इत्यादेशः स्यात् । तुवरइ तुवरेइ - त्वरते । तूरश्चेष्यते । तूरइ । "तूरंतस्स रइस्स वि मउळिज्जइ दक्खिणाअणंमि व आवो" इति सेतुः ॥ ४ ॥

### घूर्णेर्घोळः ॥ ५ ॥

"घुण घूर्ण भ्रमणे"। अत्र घूर्णतेः घोळादेशः स्यात्। घोळइ घोळेइ - घूर्णते ॥ ५ ॥

## णुदेर्णोल्लः ॥ ६ ॥

"णुद प्रेरणे"। अस्य णोल्लादेशः स्यात्। णोल्लइ - नुदति। "भणामि जं भत्तिउणेण णोल्लिओ" इति **कंसवधे** ॥ ६ ॥

## दूञो दूमः ॥ ७ ॥

"दूञ् परितापे"। अस्य दूमादेशः स्यात्। दूमेइ - दूयते। दूमिउं - दवितुम् ॥ ७ ॥

## पाटेः फाळः ॥ ८ ॥

पाटयतेः फाळादेशः स्यात्। फाळेइ - पाटयति। फाळंति - पाटयन्ति ॥ ८ ॥

## वृषादीनामृतो रिः ॥ ९ ॥

"वृषु सेचने"। "मृष मर्षणे"। "कृष विलेखने"। "हृष हृष्टौ"। "तृह हिंसायाम्"। एवमादीनामृकारस्य रिः स्यात्। वरिसइ- वर्षति। मरिसइ - मर्षति। करिसइ - कर्षति। हरिसइ - हर्षति। तरिहइ - तर्हति ॥ ९ ॥

## अन्त्यस्यारः ॥ १० ॥

धातोरन्त्यस्य ऋकारस्य अर इत्यादेशः स्यात्। सृ—सरइ - सरति। मृ—मरइ - म्रियते। कृ—करइ करेइ - करोति। भृ—भरइ - बिभर्ति। हृ—हरइ - हरति। भरेइ हरेइ इत्याद्यपि ॥ १० ॥

## कृञः कुणः ॥ ११ ॥

स्पष्टम् । कुणइ कुणाइ कुण्हति - करोति । "ण कुणंतो च्चिअ माणं णिसासु सुहसुत्तदरविबुद्धाणं" इति हालः । अरादेशश्चेष्यते— करइ करेइ इति ॥ ११ ॥

## जृम्भेर्जंभाअः ॥ १२ ॥

"जभ जृभि गात्रविनामे" । अत्र जृम्भतेः जंभाअ इत्यादेशः स्यात् । जंभाअइ - जृम्भते ॥ १२ ॥

## ग्रहेर्गेण्हः ॥ १३ ॥

"ग्रह उपादाने" । अस्य गेण्ह इत्यादेशः स्यात् । गेण्हइ गेण्हाइ गेण्हेइ - गृह्णाति । "अब्भत्थणं ण गेण्हइ" इति सेतुः ॥ १३ ॥

## घे क्त्वातुमुंस्तव्येषु ॥ १४ ॥

एषु ग्रहेः घे इत्यादेशः स्यात् । घेत्तूण - गृहीत्वा । घेत्तुं - ग्रहीतुम् । घेत्तव्वं - ग्रहीतव्यम् ॥ १४ ॥

## कृञः का भूतभविष्यतोश्च ॥ १५ ॥

भूतभविष्यतोः कालयोः कृञः का इत्यादेशः स्यात् । चकारात् क्त्वातुमुंस्तव्येषु च । भूते—काहीअ । भविष्यति—काहिअ काऊण काउं काअव्वं ॥ १५ ॥

## स्मरतेर्भरसुमरौ ॥ १६ ॥

स्मरतेर्धातोरेतौ स्तः । भरइ सुमरइ - स्मरति । "संभरइ वण्णअ तुप्पमुहीए तीए वरिउब्भणं भरिमो" इति हालः । म्हरश्चेष्यते— विम्हरिदो । "महुअर विम्हरिदो सि णं कहं" इति कालिदासः ॥१६॥

## भियो भावीभौ ॥ १७ ॥

बिभेतेरेतौ स्तः । भाइ वीभइ - बिभेति ॥ १७ ॥

## म्लायो वावाऔ ॥ १८ ॥

"म्लै हर्षक्षये" । अस्य वा वाअ इत्येतौ स्तः । वाइ वांति । वाअइ वाअंति ॥ १८ ॥

## तृपस्थिप्पः ॥ १९ ॥

"तृप प्रीणने" । अस्य थिप्पादेशः स्यात् । थिप्पइ थिप्पेइ - तृप्यति ॥ १९ ॥

## ज्ञो जाणमुणौ ॥ २० ॥

जानातेरेतौ स्तः । जाणइ मुणइ - जानाति । "अमुणिअकुसुम-णिग्गमा देंति फळं" इति सेतुः ॥ २० ॥

## जल्पेर्लो मः ॥ २१ ॥

जल्पतेः लकारस्य मकारः स्यात् । मो बिन्दुः । जंपइ - जल्पति । "जंपइ रिच्छाहिवई" इति सेतुः ॥ २१ ॥

## स्थाध्यागां ठाअझाअगाआः ॥ २२ ॥

स्थादीनां त्रयाणां क्रमात् ठाआदयः आदेशाः स्युः । ठाअइ - तिष्ठति । झाअइ - ध्यायति । गाअइ - गायति ॥ २२ ॥

**ठाझागाश्च भविष्यद्वर्तमानविध्याद्येकवचने ॥ २३ ॥**

पूर्वोक्तानां त्रयाणां भविष्यद्विध्याद्यर्थेष्वेकवचनेषु ठा झा गा एते क्रमात् स्युः । चकारात् पूर्वोक्ता अपि । ठाहिइ - स्थास्यति । ठाइ - तिष्ठति । ठाउ - तिष्ठतु । झाहिइ - ध्यास्यति । झाइ - ध्यायति । झाउ - ध्यायतु । गाहिइ - गास्यति । गाइ - गायति । गाउ - गायतु । पक्षे— ठाअहिइ ठाअइ ठाअउ इत्यादि ॥ २३ ॥

**खादिधाव्योः खाधौ ॥ २४ ॥**

"खादृ भक्षणे" । "धावु गतिशुद्ध्योः" । अनयोः क्रमात् खा धा एतौ स्तः । खाइ - खादति । धाइ - धावति ॥ २४ ॥

**ग्रसेर्घिसः ॥ २५ ॥**

"ग्रसु ग्लसु अदने" । अस्य घिसादेशः स्यात् । घिसइ घिसेइ - ग्रसति ॥ २५ ॥

**चिञश्चिणः ॥ २६ ॥**

"चिञ् चयने" । अस्य चिणादेशः स्यात् । चिणइ चिणेइ - चिनोति ॥ २६ ॥

**क्रीञः किणः ॥ २७ ॥**

"डुक्रीञ् द्रव्यविनिमये"। अस्य किणादेशः स्यात्। किणइ किणाइ किणेइ - क्रीणाति ॥ २७ ॥

## वेः के च ॥ २८ ॥

वेरुपसर्गादुत्तरस्य क्रीञः के इत्यादेशः स्यात्। चात्किणश्च। विकेइ - विक्रीणाति। वेः किम्। परिकिणाइ। उपसर्गात्किम्। भुवि किणाइ। पक्षे—विक्किणेइ ॥ २८ ॥

## उद्ध्म उद्धुमः ॥ २९ ॥

"ध्मा शब्दाग्निसंयोगयोः"। उपसर्गादुत्तरस्यास्य उद्धुम इत्यादेशः स्यात्। उद्धुमाइ - उध्मायति। उतः किम्। धमइ विधमइ इति ॥ २९ ॥

## श्रद्धो दहः ॥ ३० ॥

श्रत्पूर्वस्य दधातेः दह इत्यादेशः स्यात्। सद्दहइ - श्रद्धाति। "दिट्ठ त्ति ण सद्दहिअं" इति **सेतुः** ॥ ३० ॥

## अवाद्गाहेर्वाहः ॥ ३१ ॥

"गाहृ विलोडने"। अवादुपसर्गादुत्तरस्यास्य वाह इत्यादेशः स्यात्। 'ओदवापयोः' इत्योत्वम्। ओवाहइ अववाहइ - अवगाहते। "ओवाहिअमहिवेढो" इति **सेतुः**। अवात्किम्। विगाहइ गाहइ इति ॥ ३१ ॥

## काशेर्वासः ॥ ३२ ॥

"काशृ दीप्तौ"। अवादुत्तरस्यास्य वास इत्यादेशः स्यात्। ओवासइ - अवकाशते। ओवासं देहि - अवकाशं देहि इति ॥ ३२ ॥

## निरो माङो माणः ॥ ३३ ॥

"माङ् माने"। निरुत्तरस्यास्य माण इत्यादेशः स्यात्। णिम्माणइ - निर्मिमीते। निरः किम्। माइ परिमाइ ॥ ३३ ॥

## क्षियो झिज्जः ॥ ३४ ॥

"क्षि क्षये"। अस्य झिज्ज इत्यादेशः स्यात्। झिज्जइ - क्षीयते। "झिज्जइ झिण्णावि तणू" इति सेतुः ॥ ३४ ॥

## भिदिछिदोरन्त्यस्य न्दः ॥ ३५ ॥

अनयोरन्त्यस्य दकारस्य न्द इत्यादेशः स्यात्। भिंदइ - भिनत्ति। छिंदइ - छिनत्ति ॥ ३५ ॥

## कथेर्ढः ॥ ३६ ॥

अन्त्यस्येति वर्तते। "कथे निष्पाके"। अस्यान्त्यस्य ढः स्यात्। कढइ कढेइ - कथते ॥ ३६ ॥

## वेष्टेश्च ॥ ३७ ॥

"वेष्ट वेष्टने"। अस्य चान्त्यस्य ढः स्यात्। वेढइ - वेष्टते। "ओवाहिअमहिवेढो" इति सेतुः ॥ ३७ ॥

## उत्समोल्लः ॥ ३८ ॥

उपसर्गयोरनयोः परस्य वेष्टतेरन्त्यस्य ळ्ळ इत्यादेशः स्यात्। उव्वेळ्ळइ - उद्वेष्टते। संवेळ्ळइ - संवेष्टते। अनयोः किम्। परिवेढइ ॥ ३८ ॥

## रुदेर्वः ॥ ३९ ॥

"रुदिर् अश्रुविमोचने"। अस्यान्त्यस्य वः स्यात्। रुवइ-रोदिति। "रुवस्स मुच्चेइ" इति हालः ॥ ३९ ॥

## उदो विजेः ॥ ४० ॥

"ओविजी भंयचलनयोः"। उद उत्तरस्यास्य वः स्यात्। उव्वेवइ-उद्विजति। उदेः किम्। वेजइ। परिवेजइ ॥ ४० ॥

## वृधेर्ढः ॥ ४१ ॥

"वृधु वृद्धौ"। अस्यान्त्यस्य ढः स्यात्। वड्ढइ वड्ढए-वर्धते। 'दिट्ठिआ वड्ढसि' इति ॥ ४१ ॥

## हन्तेर्म्मः ॥ ४२ ॥

"हन हिंसागत्योः"। अस्यान्त्यस्य म्मः स्यात्। हम्मइ हम्मए-हन्ति ॥ ४२ ॥

## रुषादीनां दीर्घः ॥ ४३ ॥

"रुष रोषे"। "दुष वैकृत्ये"। "पुष पुष्टौ"। एतदादीनां धातूनामचो दीर्घः स्यात्। रूसइ-रुष्यति। दूसइ-दुष्यति। पूसइ-पुष्यति ॥ ४३ ॥

## चो व्रजिनृत्योः ॥ ४४ ॥

"व्रज गतौ"। "नृती गात्रविक्षेपे"। अनयोरन्त्यस्य चकार आदेशः स्यात्। आदेशत्वात् द्वित्वम्। वच्चइ-व्रजति। णच्चइ-नृत्यति।

अन्त्यस्येत्यधिकारो यद्यपि रुषादिसूत्रे विच्छिन्नः तथापि मण्डूकप्लुत्या अनुवर्तते । तेन व्रजनृत्योर्वकारनकारयोर्न भवति ॥ ४४ ॥

## युधबुधयोर्ज्झः ॥ ४५ ॥

"युध संप्रहारे"। "बुध अवगमने"। अनयोरन्त्यस्य ज्झ इत्यादेशः स्यात् । जुज्झइ - युध्यते । बुज्झइ - बुध्यते । "बुज्झन्ती कविपडिहा व कव्वबंधे" इति **कंसवधे** । बन्धेश्च वाच्यम्—बज्झइ - बध्यते ॥

## रुधेर्न्धम्भौ ॥ ४६ ॥

"रुधिर् आवरणे"। अस्यान्त्यस्य बिन्दुमन्तौ धकारभकारौ स्तः । रुंधइ रुंभइ - रुणद्धि । "केआरसोअरुंभणतंसदट्ठिअ कोमळो चळणो" इति **हालः** ॥ ४६ ॥

## मृदो ळः ॥ ४७ ॥

"मृद क्षोदे"। अस्यान्त्यस्य ळः स्यात् । मळइ - मृद्गाति ॥४७॥

## शदिपत्योर्डः ॥ ४८ ॥

"शद्लृ शातने"। "पत्लृ गतौ"। अनयोरन्त्यस्य डः स्यात् । सडइ - शीर्यते । पडइ - पतति ॥ ४८ ॥

## शकादीनां द्वित्वं वा ॥ ४९ ॥

"शक्लृ शक्तौ"। "तुद व्यथने"। "पुष पुष्टौ" "लग सङ्गे"। एतदादीनामन्त्यस्य द्वित्वं वा स्यात् । सकइ सक्कइ - शक्नोति । तुदइ तुद्दइ - तुदति । फुडइ - फुड्डइ - पुष्णाति । ळगइ - ळग्गइ - लगति ॥ ४९ ॥

## प्रादेर्मीलः ॥ ५० ॥

" मील निमेषणे "। उपसर्गादुत्तरस्यास्य द्वित्वं स्यात्। संमिल्लइ - संमीलति । उंमिल्लइ - उन्मीलति । प्रादेः किम् । मिलइ ॥ ५० ॥

## भुजादीनां क्त्वातुमुंस्तव्येषु लोपः ॥ ५१ ॥

" भुज परिपालनाभ्यवहारयोः "। एतदादीनामन्त्यस्य लोपः स्यात् एषु परतः । भोत्तूण - भुक्त्वा । भोत्तुं - भोक्तुम् । भोत्तव्वं - भोक्तव्यम् । मोत्तूण - मुक्त्वा । मोत्तुं - मोक्तुम् । मोत्तव्वं - मोक्तव्यम् । वेत्तूण - उदित्वा । वेत्तुं - वदितुम् । वेत्तव्वं - वदितव्यम् । रोत्तूण - रुदित्वा । रोत्तुं - रोदितुम् । रोत्तव्वं - रुदितव्यम् । णत्तूण - नत्वा । मत्तूण - मत्वा । आकृतिगणोऽयम् । भत्तुं ॥ ५१ ॥

## श्रुहुजिलूञ्धूञां णोऽन्त्यस्य ह्रस्वश्च ॥ ५२ ॥

" श्रु श्रवणे " । " हु दानादानयोः " । " जि जये " । " लूञ् छेदने " । " धूञ् कम्पने " । एभ्यो ण इति विकरणप्रत्ययः स्यात् । दीर्घवतामेषामन्त्यस्य ह्रस्वश्च । अन्त्यस्येति वर्तमानेऽपि पुनर्ग्रहणं विकरण-प्रत्यय इत्यधिकार्थप्रतिपत्त्यर्थम् । सुणइ सुणाइ - श्रृणोति । हुणइ हुणाइ - जुहोति । जिणइ जिणाइ - जयति । लुणइ लुणाइ - लुनाति । धुणइ धुणाइ - धुनोति ॥ ५२ ॥

## भावकर्मणोर्वश्च ॥ ५३ ॥

श्वादिभ्यो भावकर्मणोः वश्च णश्च स्यात् । सुव्वइ सुणिज्जइ - श्रूयते । हुव्वइ हुणिज्जइ - हूयते । जिव्वइ जिणिज्जइ - जीयते । लुव्वइ लुणिज्जइ - लूयते । धुव्वइ धुणिज्जइ - धूयते ॥ ५३ ॥

## गमादीनां द्वित्वं वा ॥ ५४ ॥

"गम्लृ गतौ"। "रमु क्रीडायाम्"। "भण शब्दे"। एषामन्त्यस्य द्वित्वं वा स्यात् भावकर्मणोः। गम्मइ गमइ - गम्यते। रम्मइ रमइ - रम्यते। भण्णइ भणइ - भण्यते ॥ ५४ ॥

## दुहलिहवहां दुब्भलिब्भवब्भाः ॥ ५५ ॥

"दुह प्रपूरणे"। "लिह आस्वादने"। "वह प्रापणे"। एषां क्रमादेते स्युर्भावकर्मणोः। दुब्भइ - दुह्यते। लिब्भइ—लिह्यते। वब्भइ उह्यते ॥ ५५ ॥

## हृञ्कृञोर्हीरकीरौ ॥ ५६ ॥

"हृञ् हरणे"। "डुकृञ् करणे"। भावकर्मणोरनयोरेतौ स्तः। हीरइ - ह्रियते। कीरइ - क्रियते ॥ ५६ ॥

## ज्ञो णज्जणप्पौ वा ॥ ५७ ॥

जानातेरेतौ वा स्तः भावकर्मणोः। णज्जइ णप्पइ - ज्ञायते। पक्षे—जाणिज्जइ मुणिज्जइ ॥ ५७ ॥

## ग्रहेर्घेप्पः ॥ ५८ ॥

"ग्रह उपादाने"। अस्य घेप्प इत्यादेशः स्यात् भावकर्मणोः। घेप्पइ - गृह्यते "ताळा घेप्पंति गुणा" इति हालः। वेत्येव—गण्हिज्जइ ॥५८॥

## क्तेन दिण्णादयः ॥ ५९ ॥

क्तप्रत्ययेन सह ददात्यादेः दिण्णादय आदेशाः स्युः भावकर्मणोः। "डुदाञ् दाने"। दिण्णं - दत्तम्। "रुदिर् अश्रुविमोचने"। रुण्णं - रुदितम्। "दह भस्मीकरणे"। दट्ठं - दग्धम्। "पुष पुष्टौ"। पुण्णं - पुष्टम्। "रञ्ज रागे"। रत्तं - रक्तम्। ॥ ५९ ॥

**तक्षे रब्बः ॥ ६० ॥**

भावकर्मणोरिति निवृत्तम्। "तक्ष तनूकरणे"। अस्य रब्बादेशः स्यात्। रब्बइ - तक्षति ॥ ६० ॥

**खिदेर्विसूरः ॥ ६१ ॥**

"खिद दैन्ये"। अस्य विसूर इत्यादेशः स्यात्। विसूरइ - खिद्यते। "विरहविसूरिणा वीसोहं" इति ॥ ६१ ॥

**क्रुधेर्जूरः ॥ ६२ ॥**

"क्रुध क्रोधे"। अस्य जूर इत्यादेशः स्यात्। जूरइ - क्रुध्यति। वेति निवर्तते। प्रयोगानुसारात् कुज्झइ - क्रुध्यति। गौरी कुज्झइ इति ॥ ६२

**चर्वेर्वंभः ॥ ६३ ॥**

"चर्व अदने"। अस्य वंभ इत्यादेशः स्यात्। वंभइ - चर्वति ॥ ६३ ॥

**त्रसेर्वुज्जः ॥ ६४ ॥**

"त्रस धारणे"। अस्य वुज्ज इत्यादेशः स्यात्। वुज्जेइ - त्रस्यति ॥ ६४ ॥

**मृजेर्लुहफुसौ ॥ ६५ ॥**

"मृजू शुद्धौ"। अस्य लुह फुस इत्येतावादेशौ स्तः। लुहइ फुसइ - मार्ष्टि। "उप्फुसइ दाणवंकं" इति **सेतुः** ॥ ६५ ॥

**बुड्डखुप्फौ मज्जेः ॥ ६६ ॥**

"टुमस्जो शुद्धौ"। अस्य बुड्डखुप्पौ स्तः। बुड्डइ खुप्पइ - मज्जति ॥ ६६ ॥

**दृशेः पुळणिअणिअच्छपेच्छाः ॥ ६७ ॥**

"दृशिर् प्रेक्षणे"। अस्यैते आदेशाः स्युः। पुळइ णिअइ णिअच्छइ पेच्छइ - पश्यति। दृशेरुवर् वाच्यः। उव - पश्यति। "उव णिच्चळ-णिप्पंदा" इति **हालः** ॥ ६७ ॥

**शकेस्तरचअतीराः ॥ ६८ ॥**

"शक्लृ शक्तौ"। अस्यैते आदेशाः स्युः। तरइ - चअइ तीरइ - शक्नोति। "तीरइ तिहुवण्सिरीए विणळोहेउं" इति **सेतुः** ॥ ६८ ॥

**अपक्रमेर्बोळः ॥ ६९ ॥**

"क्रमु पादविक्षेपे"। अपात्परस्य क्रमेर्बोळादेशः स्यात्। बोळइ बोळेइ - अपक्रामति। "दुक्खबोळे अव्वं" "कइबळं बोळीणं" इति च **सेतुः** ॥

**शेषाणामदन्तता ॥ ७० ॥**

उक्तशेषाणां धातूनामकारान्तत्वं स्यात्। चुंबइ चुंबेइ - चुम्बति। वडइ - वटति। भमइ - भ्रमति। रमइ - रमति। पचइ - पचति। संकुचइ - संकुचति इत्यादि ॥ ७० ॥

## अडादेशो बहुलम् ॥ ७१ ॥

पूर्वोक्तानामपि धातूनामडादेशे सति बहुलं रूपान्तराणि स्युरित्यर्थः । तथाहि—मज्जइ खड्डइ चव्वइ वंभइ भाअइ भाइ मिळाअइ चिट्ठइ इत्यादि सर्वत्र तिबादीनामडादेशमाद्यावयवतया कृत्वा प्रयोक्तव्यमित्यर्थः । विहितानादेशान् विनापि प्रयोगानुसारेण रूपान्तराण्यपि साधूनि भवन्ति । सर्वं चेदं बहुलग्रहणस्य प्रपञ्च इत्यवगन्तव्यम् ॥ ७१ ॥

इति रामपाणिवादविरचितायां प्राकृतप्रकाशवृत्तौ
सप्तमः परिच्छेदः ।

## अष्टमः परिच्छेदः

**निपाताः ॥ १ ॥**

अधिकारोऽयम् । इत ऊर्ध्वमा परिच्छेदसमाप्तेर्निपाता विधीयन्त इत्यर्थः ॥ १ ॥

**हुं दानपृच्छानिवारणेषु ॥ २ ॥**

एष्वर्थेषु हुमिति निपातः स्यात् । दाने—हुं पडिच्छ-हुं प्रतीच्छ । पृच्छायाम्—हुं को तुवं-हुं कस्त्वम् । निवारणे—हुं चिट्ठ-हुं तिष्ठ ॥ २ ॥

**च्चिअ च्चेअ अवधारणे ॥ ३ ॥**

एतावावधारणे वर्तेते ।

"अत्थविसेसा ते च्चिअ सद्दा ते च्चेअ परिणमंता वि ।
उत्तिविसेसो कव्वं भासा जह होइ सा होइ ॥" इति **राजशेखरः** ॥ ३ ॥

**ओ सूचनापश्चात्तापविकल्पेषु ॥ ४ ॥**

एष्वर्थेषु ओ इति निपात्यते । सूचनायाम् — ओ चारो । पश्चात्तापे—ओ ण दिट्ठा सा । विकल्पे—थाणू ओ पुरिसो ओ ॥४॥

## इरकिरकिला अनिश्चिताख्याने ॥ ५ ॥

एते अनिश्चिताख्याने निपाताः स्युः । एव्वं इर किर किळ भणंति ।

"कळ्ळं किर खरहिअअं पवसिहि पिओ त्ति सुण्णइ जणम्मि ।
तह वड्ढ भअवइ णिसे जह से कळ्ळं च्चिअ ण होइ ॥"

इति हालः ॥ ५ ॥

## हु खु निश्चयवितर्कसंभावनासु ॥ ६ ॥

एष्वर्थेषु हु खु इत्येतौ निपातौ भवतः । निश्चये-–अअं हु राआ अअं खु राआ - अयं खलु राजा । वितर्के—आगमिस्सइ हु खु पिओ - आगमिष्यति खलु प्रियः । संभावनायाम् -– णेण हु खु देवदत्तेण होदव्वं - अनेन खलु देवदत्तेन भवितव्यम् ॥ ६ ॥

## इजे रे पादपूरणे ॥ ७ ॥

एतौ पादपूरणे स्तः । "आअदो सि इजे राअं कुण रे णो मणोरहं" इति ॥ ७ ॥

## णवर केवले ॥ ८ ॥

अयं केवलार्थे निपात्यते । "किं दुप्पवेसविक्खम्भआइ णवर ण दीसंति" । केवलं न दृश्यन्त इत्यर्थः ॥ ८ ॥

संभाषणार्थे एतौ स्तः । अइ भण । वळे भण ।

"कहं खु से कंसवहं सुहावहं
सुहं व गण्हेह वळे सुहीअणा ।" इति **कंसवधे** ।

अइ मं मुञ्च ॥ १५ ॥

## वि वैपरीत्ये ॥ १६ ॥

वैपरीत्येऽर्थे वि इति निपात्यते । चंदो वि तवेइ - चन्द्रोऽपि तपति ॥ १६ ॥

## वड्ढे आमन्त्रणे ॥ १७ ॥

आमन्त्रणेऽर्थे वड्ढे इति निपात्यते । वड्ढे जहिट्ठं गच्छ । आमन्त्रणं कामचारानुज्ञा ॥ १७ ॥

## अरे रे संभाषणरतिकलहाक्षेपेषु ॥ १८ ॥

एष्वर्थेष्वेतौ निपातौ भवतः । संभाषणे—अरे भण । रे भण । रतिकलहे—

"अरे कुरंगच्छि भुआहिँ वेढणं
कुणेसु रे मा कुण माणबंधणम् ।" इति ।

आक्षेपे—अरे रे ण मे अणुमदो सि ॥ १८ ॥

## पिव मिव विव इवार्थे ॥ १९ ॥

एते त्रय इवार्थे स्युः । चंदो पिव वअणं - चन्द्र इव वदनम् ।

"चंदो पिव वअणं दे जोण्हामिव दंतकांतिरिच्छोळी ।
किं च कळंको विव दे भुमआ भंगो पिए भाइ ॥"

इति ॥ १९ ॥

**अग्घो हंहो आभिमुख्यकरणे ॥ २० ॥**

आभिमुख्यकरणे एतौ भवतः । अग्घो बंहण इदो दाव । हंहो धम्मिआ सुणह ॥ २० ॥

**हद्धि निर्वेदे ॥ २१ ॥**

निर्वेदे हद्धीति वर्तते । हद्धि वंचिदो म्हि ॥ २१ ॥

**ही हर्षे ॥ २२ ॥**

हर्षे हीति भवति । ही सिद्धो मणोरहो ॥ २२ ॥

**शेषः संस्कृतात् ॥ २३ ॥**

कृत्तद्धितसमासादिलक्षणा ये शब्दास्ते शेषशब्देनोच्यन्ते । येषामत्र प्रतिपदं न लक्षणमुक्तं तेषां संस्कृतशब्देभ्य एव व्युत्पत्तिः । किं तु 'ठो ढः' 'पो वः' 'टो डः' 'नो णः' 'अत ओत्सौ' इत्यादिसामान्यलक्षण-विशिष्टाः संस्कृतप्रकृतयः शब्दा वेदितव्याः । पढइ - पठति । कुविओ - कुपितः । णअणं - नयनम् । माहवो माधव इत्यादि । तद्भवं तत्समं देश्यमिति त्रयः प्रकाराः प्राकृतेषु । तत्र तद्भवं तस्मात्संस्कृतादेव संभूतम् । पहवइ - प्रभवति । चुंबइ - चुम्बति । गच्छइ - गच्छति । तत्समं संस्कृतमेव । यथा—करणं हरणं रामः माधवः इत्यादयश्च । देश्यं यथा—कंदोट्टं-

इन्दीवरम् । दोग्घट्टो - गजः । चिप्पोळं - धिक्कारः । पैशाचे तु तद्भवमेव । शषसानां शः । णिशाए काशाळो इत्यादि । रलयोर्ळः । ळामो । णळो । अहमित्यत्र अहके—"अहके ळोशपळित्ता" इत्यादि । एतावानेव विशेषः । तद्भवमेवेदमपि । तद्भवस्य संस्कृतात् 'ठो ढः' 'पो वः' 'टो डः' 'नो णः' इत्याद्यक्षरविकारमात्रमेव । पैशाचेऽपि 'शषसां शः' 'रडलानां ळः' इत्येतावन्मात्रमेव विशेष इति ॥ २३ ॥

प्राकृतलक्षणमेतत्प्रायेणोक्तं प्रयोगमनुसृत्य ।
अपरमपभ्रंशादेर्लक्षणमन्यत्र विज्ञेयम् ॥

**इति रामपाणिवादविरचितायां प्राकृतप्रकाशवृत्तावष्टमः परिच्छेदः**

# सूत्रानुक्रमणिका

# प्राकृतपदानुक्रमणिका

आ

ऊ



ए



ओ



क

त

ळ

# उदाहरणसूची

८ - ७ आअदो सि इजे राअं कुण रे णो मणोरहं (?)

६ - २४ आभासइ सुग्गीवो

सेतुः ३-२

२ - १४ आमेळं कुवळअपुव्वमुव्वराअं

कंसवहो ३-२८

४ - ६ आरोविएण धणुहेण सुबाहुसत्तुं

सेतुः (?)

४ - ३० आळाणक्खंभेसु व बाहूसु सिळाअळट्ठिएसु णिसण्णे

सेतुः ३-१

१ - १३ इअ अत्थिरसामत्थे

सेतुः ३-५३

१ - २ इसि चुम्बिआइ भमरेहिँ

शाकुन्तलम् १-४

४ - १ उक्खअहिअअगिरिबंधणं वच्छअळं

सेतुः ४-२२

७ - ६५ उप्फुसइ दाणवंकं

सेतुः १-३३

१ - २१ उळुहळे णिअदो महुसूअणो (?)

४ - ९ उवगओ सरओ

सेतुः १-१६

६ - १८ उव णिच्चळणिप्पंदा

गाथासप्तशती १-४

७ - ६७ ,, ,,

४ - १२ एमेअ तत्थ ण हु काळणमत्थि रूवं

कर्पूरमञ्जरी ३-९

४ - २० ओवाहिअमहिवेढो

सेतुः १-४

७ - ३१ ,, ,,

७ - ३७ ,, ,,

४ - १९ अत्ता भणामि भणिअं तुम्हाण विपंडरा वट्टी

गाथासप्तशती ७-७६

७ - ६९ कइबलं बोळीणं

सेतुः (?)

८ - ५ कळ्ळं किर खरहिअअं पवसिहि पिओत्ति सुण्णइ जणम्मि ।
तह वड्ढ भअवइ णिसे जह से कळ्ळं चिअ ण होइ ॥

हालः १-६४

६ - २० कह मण्णे होज्ज जाणई साणुणआ

सेतुः ११-२७

३ - ५५ कह विरहप्पडिऊळा होहिइ समुहहिअआ पइम्मि उवगए

सेतुः ११-२६

४ - १५ ,, ,,

८ - १५ कहं खु से कंसवहं सुहावहं
सुहं व गण्हेह वळे सुहीअणा

कंसवहो १-२

८ - ८ किं दुप्पवेसविक्खंभआइ णवर ण दीसंति

सेतुः (?)

७ - ४६ केआरसोत्त रुंभइतसट्ठिअ कोमळो चळणो

गाथासप्तशती ७-९०

१ - ४१ कोसळ्ळातणअस्स जत्थ चळणे वंदामि णंदामि अ

बालरामायणम् ६-१९

३ - ८ गाढअरुह्मो गिम्हो अइदीहराइ जोण्हे

कर्पूरमञ्जरी ४-१

३ - ३० गामवडस्स पिउच्छा

गाथासप्तशती ३-९५

४ - ३४ गोळाणइ कच्छवासिणा गरिअसीघेण

गाथासप्तशती १-७५

८ - १९ चंदो पिव वअणं दे जोण्हामिव दंतकांतिरिच्छोळी ।
किं च कळंको बिअ दे भुमआ भंगो विए भाइ ॥ (?)

६ - २४, ७ - ११ जंपइ रिक्खाहिवई

सेतुः ४-१९

३ - २६ जस्स फुरंते णहप्पहाविच्छड्डे

सेतुः १-२

२ - ८ जुवराजो वच्छ भरहो त्ति (?)

४ - २४ जोण्हामुत्ताहळिळ्ळं णदमउळिणिहित्तग्गहत्थेहिँ दोहिँ

कर्पूरमञ्जरी १-४

७ - ३४ झिज्झइ झिण्णा वि तणू

सेतुः १-३५

२ - २६ ढिळ्ळे वरिळ्ळंचळे

कर्पूरमञ्जरी ३-३

७ - ११ ण कुणंतो व्विअ माणं णिसासु सुहसुत्तदरविबुद्धाणं

गाथासप्तशती १-२६

३ - ५६ णक्खक्खुडिअसरसं महासुरहिअअं

सेतुः ४-२१

८ - ९ णवरिअ समुद्दवेळं बोळंति सुअंधबंधुरणवेळं

सेतुः (?)

१ - २४　दुक्खाळोआइँ महुअपुप्फाइं
　　　　　　गाथासप्तशती २-४

१ - ३९　धीरं हरइ विसाओ
　　　　　　सेतुः ४-२३

४ - २२　पाऊण णिरवसेसं कुसुमरसं अत्तणो कुसळदाए
　　　　　　गाथासप्तशती (?)

४ - २१　पीणत्तणदुग्गेज्झं
　　　　　　सेतुः १-३

४ - ३४　फिडिआ सुरसंखोहा
　　　　　　सेतुः ४-६४

७ - ४५　बुज्झंती कविपडिहा व कव्वबंधे
　　　　　　कंसवहो ३-२

७ - ६　भणामि जं भत्तिउणेण णोळ्ळिओ
　　　　　　कंसवहो १-२

२ - ३५　भिसिणीपत्तम्मि रेहइ बळाआ
　　　　　　गाथासप्तशती १-४

५ - ३०　माआ घरोवअ अरणं
　　　　　　गाथासप्तशती ८८९

५ - ७४　माआ घरो व अरणं अज्ज खु णत्तित्ति साहिअं तुमए
　　　　　　गाथासप्तशती ८८९

४ - ३४　महावराहदाढाभिण्णं
　　　　　　सेतुः ४-२२

७ - १६　महुअर विम्हरिदो सि णं कहं
　　　　　　शाकुन्तलम् ५-१

४ - ५　महुमहहत्थम्मि मए
　　　　　　सेतुः ४-२१

---

## * दशमः परिच्छेदः

**पैशाची ॥ १ ॥**

पिशाचानां भाषा पैशाची । सा च लक्ष्यलक्षणाभ्यां स्फुटीक्रियते ॥ १ ॥

**प्रकृतिः शौरसेनी ॥ २ ॥**

अस्याः पैशाच्याः प्रकृतिः शौरसेनी । स्थितायां शौरसेन्यां पैशाची-लक्षणं प्रवर्तयितव्यम् ॥ २ ॥

**वर्गाणां तृतीयचतुर्थयोरयुजोरनाद्योराद्यौ ॥ ३ ॥**

वर्गाणां तृतीयचतुर्थयोर्वर्णयोरयुक्तयोरनादौ वर्तमानयोः स्थाने आद्यौ प्रथमद्वितीयौ भवतः । गकनं - गगनाम् । मेखो - मेघः । राचा - राजा । णिच्छरो - निर्झरः । वटिसं - बडिशम् । दसवतनो - दशवदनः । माथवो - माधवः । गोविंतो - गोविन्दः । केसवो - केशवः । सरफसं - सरभसम् । सलफो - शलभः । अयुजोरिति किम् । संगामो - संग्रामः । वग्घो - व्याघ्रः इत्यादि । अनादाविति किम् । गमणं - गमनमित्यादि ॥ ३ ॥

**इवस्य पिवः ॥ ४ ॥**

इवशब्दस्य स्थाने पिव इत्ययमादेशो भवति । कमलं पिव मुखं ॥ ४ ॥

* प्रसाधनान्तरानुरोधेनेयं संख्या अनेनास्मिन् प्रसाधने नवमेन परिच्छेदेन भवितव्यम् ।

**णो नः ॥ ५ ॥**

णकारस्य स्थाने नकार इत्ययमादेशो भवति। तलुनी-तरुणी ॥५॥

**ष्टस्य सटः ॥ ६ ॥**

ष्ट इत्यस्य स्थाने सट इत्ययमादेशो भवति। कसटं मम वट्टइ - कष्टं मम वर्तते ॥ ६ ॥

**स्नस्य सनः ॥ ७ ॥**

स्न इत्यस्य स्थाने सन इत्ययमादेशो भवति। सनानं-स्नानम् ॥७॥

**र्यस्य रिअः ॥ ८ ॥**

र्य इत्यस्य स्थाने रिअ इत्ययमादेशो भवति। भारिआ-भार्या ॥८॥

**ज्ञस्य ञ्ञः ॥ ९ ॥**

ज्ञ इत्यस्य स्थाने ञ्ञ इत्ययमादेशो भवति। विञ्ञातो - विज्ञातः। सव्वञ्ञो - सर्वज्ञः ॥ ९ ॥

**कन्यायां न्यस्य ॥ १० ॥**

कन्याशब्दे न्यस्य स्थाने ञ्ञ इत्ययमादेशो भवति। कञ्ञा कन्या ॥ १० ॥

**ज्ज च ॥ ११ ॥**

ज्जशब्दस्य शौरसेनीसाधितस्य च्च इत्ययमादेशो भवति। कच्चं - कार्यम् ॥ ११ ॥

## राज्ञो राचि टाङसिङस्ङिषु वा ॥ १२ ॥

राजन्शब्दस्य टा ङसि ङस् ङि इत्येतेषु परतो राचि इत्ययमादेशो वा भवति। राचिना रञ्ञा-राज्ञा। राचिनो रञ्ञो-राज्ञः। राचिनि रञ्ञि-राज्ञि। एतेष्विति किम्। राचा। राचानं। रञ्ञो ॥१२॥

## क्त्वस्तूनं ॥ १३ ॥

क्त्वाप्रत्ययस्य स्थाने तूनमित्ययमादेशो भवति। दातूनं-दत्त्वा। कातूनं-कृत्वा। घेत्तूनं-गृहीत्वा ॥ १३ ॥

## हृदयस्य हितअकं ॥ १४ ॥

हृदयशब्दस्य हितअकं निपात्यते। हितअकं हरसि मे तलुनि-हृदयं हरसि मे तरुणि ॥ १४ ॥

इति वररुचिकृतप्राकृतप्रकाशे मनोरमायां वृत्तौ पैशाचिको नाम दशमः परिच्छेदः।

# एकादशः परिच्छेदः

**मागधी ॥ १ ॥**

मागधानां भाषा मागधी । लक्ष्यलक्षणाभ्यां स्फुटीक्रियते ॥ १ ॥

**प्रकृतिः शौरसेनी ॥ २ ॥**

अस्या मागध्याः प्रकृतिः शौरसेनीति वेदितव्यम् ॥ २ ॥

**षसोः शः ॥ ३ ॥**

षकारसकारयोः स्थाने शो भवति । माशे - माषः । विलाशे - विलासः ॥ ३ ॥

**जो यः ॥ ४ ॥**

जकारस्य यकारो भवति । यायदे - जायते ॥ ४ ॥

**चवर्गस्य स्पष्टता तथोच्चारणः ॥ ५ ॥**

चवर्गो यथा स्पष्टस्तथोच्चारणो भवति । पलिच्चए - परिचयः । गहिदच्छले - गृहीतच्छलः । वियले - विजलः । णिज्झले - निर्झरः ॥ ५ ॥

**हृदयस्य हडक्कः ॥ ६ ॥**

हृदयस्य स्थाने हडक्को भवति । हडक्के आलले मम - हृदये आदरो मम ॥ ६ ॥

**र्यर्जयोर्य्यः ॥ ७ ॥**

र्यकारर्जकारयोः स्थाने य्यो भवति । कय्ये - कार्यम् । दुय्यणे - दुर्जनः ॥ ७ ॥

**क्षस्य स्कः ॥ ८ ॥**

क्षस्य स्थाने स्ककारो भवति । लस्कशे - राक्षसः । दस्के - दक्षः ॥ ८ ॥

**अस्मदः सौ हके हगे अहके ॥ ९ ॥**

अस्मदः स्थाने सौ परतो हके हगे अहके इत्येत आदेशा भवन्ति । हके हगे अहके भणामि - अहं भणामि ॥ ९ ॥

**अत इदेतौ लुक् च ॥ १० ॥**

सावित्यनुवर्तते । अकारान्ताच्छब्दात् सौ परत इकारैकारौ भवतः । पक्षे लोपश्च । एशि लाआ - एष राजा । एशे पुलिशे एष पुरुषः ॥ १० ॥

**क्तान्तादुश्च ॥ ११ ॥**

क्तप्रत्ययान्ताच्छब्दात् सौ सरत उकारश्च भवति । चकारात् इदेतौ लुक् च । हशिदु हशिदि हशिदे हशिद - हसितः ॥ ११ ॥

**ङसो हो वा दीर्घत्वं च ॥ १२ ॥**

ङसः षष्ठ्येकवचनस्य स्थाने हकारादेशो वा भवति । तत्संयोगे च दीर्घत्वम् । पुलिशाह धणे पुलिशश्श धणे - पुरुषस्य धनम् ॥ १२ ॥

**अदीर्घः संबुद्धौ ॥ १३ ॥**

अदन्तादित्येव । अदन्ताच्छब्दादकारो दीर्घो भवति संबुद्धौ । पुलिशा आगच्छ । माणुशा आगच्छ । संबुद्धाविति किम्[2] । बम्हणश्श धणे - ब्राह्मणस्य धनम् ॥ १३ ॥

**चिट्ठस्य चिष्ठः ॥ १४ ॥**

चिट्ठस्य स्थाने चिष्ठ इत्ययमादेशो भवति । पुलिशे चिष्ठदि-पुरुषस्तिष्ठति ॥ १४ ॥

**कृञ्मृङ्गमां क्तस्य डः ॥ १५ ॥**

डुकृञ् करणे । मृङ् प्राणत्यागे । गम्लृ गतौ । एतेषां क्तप्रत्ययस्य स्थाने डकारो भवति । कडे - कृतः । मडे - मृतः । गडे - गतः ॥ १५ ॥

**क्त्वो दाणिः ॥ १६ ॥**

क्त्वाप्रत्ययस्य स्थाने दाणि इत्ययमादेशो भवति । शहिदाणि गडे - सोढ्वा गतः । करिदाणि आअडे - कृत्वा आगतः ॥ १६ ॥

**शृगालस्य शिआलाशिआलेशिआलकाः ॥ १७ ॥**

शृगालशब्दस्य स्थाने शिआलादय आदेशा भवन्ति । शिआला आअच्छदि शिआले आअच्छदि शिआलके आअच्छदि - शृगाल आगच्छति ॥ १७ ॥

इति वररुचिकृतप्राकृतप्रकाशे मनोरमायां वृत्तौ
मागध्याख्य एकादशः परिच्छेदः

## द्वादशः परिच्छेदः

शौरसेनी ॥ १ ॥

प्रकृतिः संस्कृतम् ॥ २ ॥

अनादावयुजोस्तथयोर्दधौ ॥ ३ ॥

व्यापृते डः ॥ ४ ॥

पुत्रेऽपि क्वचित् ॥ ५ ॥

इ गृध्रसमेषु ॥ ६ ॥

ब्रह्मण्यविज्ञयज्ञकन्यकानां ण्यज्ञन्यानां ञ्ञो वा ॥

सर्वज्ञेङ्गितज्ञयोर्णः ॥ ८ ॥

क्त्व इअः ॥ ९ ॥

कृगमोर्दुअः ॥ १० ॥

णिर्जश्शसोर्वा क्लीबे स्वरदीर्घश्च ॥ ११ ॥

भो भुवस्तिङि ॥ १२ ॥

न लृटि ॥ १३ ॥

ददातेर्दे दइस्स लृटि ॥ १४ ॥

डुकृञः करः ॥ १५ ॥

स्थश्चिट्ठः ॥ १६ ॥

स्मरतेः सुमरः ॥ १७ ॥

दृशेः पेक्खः ॥ १८ ॥

अस्तेरच्छः ॥ १९ ॥

तिपात्थि ॥ २० ॥

भविष्यति मिपा स्सं वा स्वरदीर्घत्वं च ॥२१॥

स्त्रियामित्थी ॥ २२ ॥

एवस्य जेव्व ॥ २३ ॥

इवस्य विअ ॥ २४ ॥

अस्मदो जसा वअं च ॥ २५ ॥

सर्वनाम्नां ङेः सित्वा ॥ २६ ॥

धातोर्भावकर्तृकर्मसु परस्मैपदम् ॥ २७ ॥

अनन्त्य एच्च ॥ २८ ॥

मिपो लोटि च ॥ २९ ॥

आश्चर्यस्याचरिअं ॥ ३० ॥

प्रकृत्या दोलादण्डदशनेषु ॥ ३१ ॥

शेषं महाराष्ट्रीवत् ॥ ३२ ॥

इति वररुचिकृतप्राकृतप्रकाशे द्वादशः परिच्छेदः ।

# MANUSCRIPT VARIANTS

Ta. Palm leaf manuscript from the University of Travancore No. 2533.

Tb. Palm leaf manuscript from the University of Travancore No. L. 106.

P. Palm leaf manuscript from the Library of the Paliyam, Cochin State (Modern paper transcript kept in the Madras Government Oriental Library, R. 5209)

The Sūtra No. is given before each set of notes. Within the notes, the figures refer to the line number within the commentary under the Sūtras. If no such No. is given, it refers to the Sūtra itself.

## PARICCHEDA I

### INTRODUCTORY

Ta and Tb begin हरिः श्रीगणपतये नमः । अविघ्नमस्तु । सुकृतिभिरेव । Ta. 1. गंभीरां 3. पादां P. 3. त्रयं missing, space left blank 5 प्रदर्श्यते for क्रियते. 8. Ta विधीयमानः स्वाभाविकाभ्यां 9. विन्दोः Ta and Tb. 9. यथा विधीयमानः । P. 10. फंसुण for फंसो. 12. अन्तयोः for वर्णयोः 13. विहितत्वा-भावात् for तावदविहितत्वात्. There is यथा before पेक्खइ. P. has considerable variations The first examples are समिद्धी सामिद्धी and सरिच्छं सारिच्छं. Then follows अत्र ऋष्यादित्वादकारस्यैकार: । Then the example सरिच्छं सारिच्छं, followed by अत्र क्वचिद्युक्तस्यापि इति ऋकारस्य रिः The examples पसुत्तो पासुत्तो, पअडो पाअडो etc., follow. Lines 10 and 11 missing.

## SŪTRAS

I. 1 P. अधिकारोऽयम् missing. Ta and Tb आदेरित्येतदापरिच्छेद-समाप्तेः । P 2. प्राचीनेषु 3. The word विषयः missing Ta. Tb., P. च omitted. 4. इति omitted. अरण्यं रण्णं. 4 P. अरव्यईणम् for रण्ण.

II. Ta. 1. अकारादेशो । समिद्धी missing. Ta. and Tb. 2, 3. portions from सरिच्छं up to इति रिः missing. Ta. 2. पास्सुत्तो पस्सुत्तो (written पा०सु०त्तो प०सु०त्तो) 4. पाअडो पअडो । Ta, Tb 4, 5 आहिआई अहिआई 6 Ta. पाडिफद्धी पडिफद्धी Tb. पाडिप्फद्धी पडिप्पधी. Ta and Tb. सदृक्ष given before प्रसुप्त in the *Chāyā* given here. 11 सूत्राणां Tb. दुर्लभ्यमित्यर्थः। 13. Ta, Tb, P. संस्कृतप्राकृतोन्मिश्रा इति missing.

III. Ta, Tb. व्यञ्जन Tb. In मृदंगांगा a letter written after the first गा and before the *Anusvāra*, and scored. 1. P. शब्देषु missing. Ta. आदेशकार first written; then श scored and र written below it with a cross mark above. 2 Ta, Tb, P. सिविणं सवणं 2, 3. Ta, Tb. वेदिसं वेदसं P. वेइसं वेअसं 3. Ta, Tb. विजणं वंजणं (In Tb. वंजणं written above the line with a cross mark below). P. वजणं Ta, Tb. P मइंगं मअंगं. 4. Ta, Tb. इंगारो अंगारो. Ta न्त added below the line between थ and हिं with a cross mark above. A letter written and completely scored before भम. 5. A letter written after का and scored; वी follows. After ह and the ए mark of the following स्वो a letter written and scored and स्वा follows, making it स्वो 4. Tb. After चुंबि a letter begun and deleted, and आ follows. 5. P. ह्रस्व इति गृह्णाण.

IV. 1. P. अस्वरितत्वात् missing Ta. After स्यात् a letter begun and scored.

V. 1. P. एतेष्वादेरत Ta, Tb. शय्या आश्चर्य पर्यन्त उत्कर वल्लि त्रयोदश सौन्दर्य before एतेषु. Ta. अच्चेरं written as अच्छेरं with च and छ and there is also the *anusvāra* mark before that to indicate doubling Tb. written अच्शेरं which is a general way of writing अच्छेरं in Malayalam. 3. 4. P. The citation missing. 4. Ta, Tb. P. The whole sentence missing.

VI. Ta. 1. सहा । ओत्त्वं P. दत्वं. This must be the scribe's error since in the Malayalam original ओ and द are likely to be confused. Ta, Tb 3. लोपो यकारस्य इति missing.

VII. P. 2. 3. अनादेशयोर्यकारलोपस्तु वक्ष्यमाणेन प्रायोलोपेनेति बोध्यम् । The passage तेन etc. missing

VIII. 1. P. अत: for अकारस्य and तदुक्त for तदुत्तर 2. The examples are चोंधि चउंधि चोंदही चउंदही. evidently the scribe has confused *anusvāra* and mark for doubling.

IX. 1. P. आदेरकारस्य 2. P. च for वचा 4 P. omits from उक्खादो up to चड्ड.

X. 2. P. अत्र missing.

XI. Ta, Tb. P. ए for एत् 1. P. शब्दरूपेषु Ta. एकारोदेशो 2. Ta. पिट्ठं missing. 3. P. धेमल्लो 3, 4. Ta, Tb P. forms for विह्वल and विक्रम missing. The *Chāyā* contains these two words. 4. समशब्देन repeated संयुक्तोत्तरत्वमुक्तम् P. संयुक्तोत्तरतोच्यते (either of this is the correct reading). 5. Ta, Tb. यथा missing. 6, Ta, Tb. इति missing. P. omits the passage from यथा to इति.

XII. 1. P. स्थाने missing. Ta. अकारोदेश: 2. Ta, Tb. P. हळ्ही.

XIII. 1. P. इतेस्तकारात्परस्येकारस्य Ta. अकारस्तस्यात् (the letter स्त not deleted). 1, 2 P. त इत्यनेन स्थानिविशेषस्य निर्दिष्टत्वात् 2. P. आदे- up to अथवा missing. 3, 4. Ta, Tb. वर्तमानस्येव for वर्तमानस्य इतेरित्यर्थ: 4. Ta, Tb. भणादि Ta. In अत्थिर the letter त्थि looks more like हि Tb. त्तो written as a double त and not a single त with an *anusvāra* mark before to indicate doubling. P. देवदेत्तो भणादि. The citation missing 5. Ta. First written दि ; then इ mark crossed and आ mark added. Tb. कहात्ति P. only one example , कामांत्ति.

XIV. 1. P. विच्छूओ.

XV. P कुब्ज: I. Ta, Tb. य missing after द्विधाशब्दस्य. P. has the entire commentary as. कुब्परे द्विधाशब्द इकारस्य ओकार: स्यात्। चकाराद्व- कारश्च । द्विधा क्रियते इत्यत्र देहा कीरइ दुहा कीरइ दीहा कुणइ दुहा कुणइ.

XVI. Ta, Tb. P च at the end of sūtra missing. 2. P. अपि missing. Ta, Tb. P. सहंति (this correct). P. सेतौ,

XVII. Ta, Tb. P. इवेलोप: 1. P. रामो व्व.

XVIII. 1. P. आदेरिकारस्य 8. इकारादेश: 2. Ta. Tb. रण्णादु तण रण्णादु पाणिअं सव्वदो सअं गाअं। P. रण्णादुतणं रण्णादु वाणिअं सव्वदो सअ गाहं Ta, Tb. विळिअं missing but given in *Chāyā* 3. दुदिअं 3, 4. P. all examples from दुइअं missing , but given in *Chāyā*. करी only for करिसं. 4. Ta, Tb. तिदिअं. 5. Ta, Tb. P. गरिअं.

XIX. Ta, Tb. P. ए वीळापीडे etc. 1. Ta. before एष्वादे: the letter ष written and scored. Ta, Tb. णेळ P. नेळं Ta आमेडं missing. Tb. आमेळं 2 Ta, Tb. P. एरिसं केरिसं. Ta. आपीडशब्दे पकारस्य मकारोदेशो P. omits the passage आपीडशब्दस्य etc

XX. Ta. P. उत ओ तुण्डरूपेषु Tb. ओत ओ तुण्डरूपेषु 2. P. कोट्टिमं missing. 3. Ta, Tb. P. इत्यादि missing Ta, Tb. अत्र missing. Ta. After मुञ्जु the letter ञ or ज्ञ written and scored and ञ written after that. पुञ्जादिष्वापि. P. मुण्डपिञ्जादिष्वपि. 4. Ta. द्र first written and ऋ mark added , but ऋ mark remains.

XXI. 1. Ta, Tb. P. ळुकारेण सह ओत्वं (this correct). 2. Tb. उळुहळबाहुलकाद्ध्रस्व: M. ओहळं उदूहळं P. उहळमित्यत्र तु बाहुलकाद्ध्रस्वः Ta. In उळुहळे after उ a letter, perhaps उ, written and scored, and ळुहळे follows, 2, 3. P. citation missing. 3. Ta, Tb. इति missing.

XXII. Ta, Tb एष्वादेरुकारस्य, अकारो नित्यं स्यात् 2. P. आदेः किं up to मा भूत् missing. 3. Ta. Tb. जहिट्ठिरो.

XXIII. Ta, Tb. P. रे for रो: Tb writes इल्पुरुषे since in Malayalam त् is pronounced ल् in that position. Ta. I. written पुरुषशेब्दे and ए mark of शे scored. M इकारः for इत्वं 2. P. स्थानिविशेषस्य निर्दिष्टत्वात् Tb. 2 After निर्दे the letter दा written. Then द scored and श written below, and दादेरिति follows. 3. P. Citation missing.

XXIV. Ta, Tb. अस्मिन्नादेरूकारस्य and P. मधूक आदेरूकारस्य for मधूकशब्दे ऊकारस्य Ta, Tb. P. 1, 2. दुक्खाळो आइ महुअपुप्फाइ. Tb. has a ह for फ written पुण्हाइ.

XXV. 1. Ta, Tb. P. दुकूले आदेरूकरस्य. P. अकारो for अत्वं 3. P हि extra after ळकारोच्चारण,

XXVI. 1. Ta. written अस्मि आकान्नूकारस्य. Then आका scored. P. एत्वं स्यान्नित्यम् । 1, 2. P. omits citation. 2. Ta, Tb. इति सेतुः missing

XXVII. 1. P. आकारादेशः 2. P. इत्यादि missing.

XXVIII. 2. Ta, Tb. P. अयुक्तस्य किम्.

XXIX. 2. P. अह्मारिसो. Tb. I. After केरिसो a word written and completely scored and तारिसो follows. 3. क्वचिग्रहणात् 3, 4. P. तादिसो जादिसो. Ta. 4. तासो Tb तासो; then दि below line between the two letters.

XXX. 2 Ta, Tb. P. All examples after किचा missing. But *Chāyā* gives गृष्टि etc In the *Chāyā* then is भृङ्ग भृङ्गार श्रृङ्गार after गृष्टि. The word श्रृगाल given as सृगाल. There is कृमि between कृति and सृष्टि. (Tb. writes क्रिमि). 5. 6. P. omits all from आकृतिगणोऽयम् onwards.

XXXI. 1. P. उत्त. for वुत्तं. 2. Ta, Tb. पावुसो After वुसहो all examples missing, but *Chāyā* gives वृत्त etc. Ta, Tb. निवृत्त for निवृत्ति Ta, Tb. P After परभृत there is भ्रातृ मातृ जामातृ Ta, Tb. has ननान्द also Tb. has यातृ between जामातृ and ननान्द extra. 6. Ta, Tb. इत्यादि missing. Ta. प written after गणोऽय and scored; then मपि follows. P. omits all from आकृतिगणोऽयम् onwards.

XXXII. Ta, Tb. वृक्षे खेन रुवा 1. P. वृक्षे वकारेण सह.

XXXIII. Tb. अतः for ऌतः 1. P. इलीत्यादेशो नित्यं स्यात्.

XXXIV. 1. Tb. अनयोरादेरकारस्य. 2. Ta. After वाशब्दमनु there is. म· written and scored; and व follows. What follows is only त्य and not त्यं 3. P. केचिदिच्छन्ति.

XXXV. Ta ऐत ऐत्. Then the mark in ऐ crossed and ए remains. 2. Ta, Tb. There is सेरं स्वैरं also after वेरं. P. omits केएई इत्यादि.

XXXVI. 1. Ta. P. only अइत्यादेश: P. वास्यात् । 2. Tb. भइवरं 3. Ta, Tb. P. All examples after भइरअं missing, but *Chāyā* gives कैटभ etc. 4 Tb. इत्याद्यपि after the *Chāyā*. P. has इत्यादि and omits सेरं भेरवं इत्याद्यपि बाहुळकात्.

XXXVII. P. दैवा वा 1. Ta, Tb. अत्र अयिर्वा स्यात.

XXXVIII. 1. P. सैन्धवे. Ta. Tb. There is only स्पष्टम्; no commentary gives example.

XXXIX. Ta, Tb. 1. Here also no commentary; only स्पष्टम्. Example and citation given. 2, 3. धीरा सर गरुअं इति सेतौ.

XL. 1. P. omits ओत अद्वा इतिच्छेदः Ta. प्रकोष्ठे य ओकारस्तस्य Tb. प्रकोष्ठे यदकारस्तस्य 1, 2. P. प्रकोष्ठे ओकारस्य अकारो वा स्यात्.

XLI. 1. P. आदेरौतः Ta, Tb. Only कोथुहो. 2. Ta In कोसळ्ळा after को a letter started and scored and सळ्ळा follows 2, 3. Ta, Tb. The citation from Rājas'ekhara missing. P. कोसळ्ळातणअस्स जत्थ चळण वंदामि णंदमिअ omits इति राजशेखरः

XLII. Ta, Tb. पौराकृतिष्वद्धः This is the correct reading. 1. Ta, Tb. पौरशब्दसदृशेषु शब्देषु P. पौरादिषु शब्देषु 2. Tb. पउरस्सं. There is something like an *Anusvāra* between र and सं. 3. Ta. Tb. P. रउद्दो missing. But *Chāyā* gives रौद्र. In the citation सोढूण. 4. Ta, Tb. इति चेत् missing. 5. Ta, Tb. P. तत्र तत्रोद्धष्यते 7. Ta, Tb. P. तेन च प्रयोगानुसारेण. 8. Ta. After पादानात्सि, a letter written and scored and द्ध follows. 1. P. उकारादेशः 2. Ta. शस्यादिगणे. 3. Tb. भुजाअणो. Ta, Tb. P. only प्राकृतवृत्तौ in colophon.

---

## PARICCHEDA II

I. Ta. परिच्छेदस्य; then स्य scored. P. अधिक्रियमाणा.

II. P. पयवानां. 1. Ta. कादी; then च written and scored and नाचवानां follows. P. हलां नवानां. 2. Tb. After मिओ a letter written and scored and णीओ follows. P. काओ before मिओ. 4. Ta, Tb. इत्यादि missing. Ta, Tb. अयुक्तस्य किम्. 5. पावं काळो (जओ missing).

III. 1. P. omits अयुक्तस्यानादावित्येव. and the whole passage is यमुनायामयुक्तस्यानादौ वर्तमानस्य मकारस्य लोपः स्यात्. Ta. अयुक्तस्यादावित्येव. The letter स्त written below the line between र and स्य. 2. Ta, Tb.

P. अयुक्तेत्यादेरिह. P उत्तरार्थमधिकारत्वादनुवर्तनम्. 2, 3. P. omits all from अत्र यकारस्य onwards.

IV. Ta, Tb. P. चिकुरशीकरेषु को ह: 1. Ta, Tb. P. फळिहं. 2. Ta, Tb. P. णिहसं

V. P. चन्द्रिकायां म:

VI. 1 P. प्रायोलोपापवाद: only this much. Tb. First प्रायोलोपावादा; then प below the line between पा and वा. Ta. first written अयुक्तस्यानोद:; then the ए mark in नो scored and ना remains. Ta, Tb. P. अयुक्तस्यानादे: This is correct. Ta, Tb. रअदं follows हदं, 3. Ta, Tb. P. अनादौ किम्. 3, 4. P omits all from अयुक्तस्येति onwards. But after हत it has सद्गतनिकृतवृत इत्यादि in *Chāyā* though these are not given in Prakrit. In Prakrit हद is before रअदं; but in *Chāyā* हत follows रजत.

VII. 1 P. omits पडिच्छइ. 2 Ta, Tb. संखसिव्वि व्व.

VIII. Ta, Tb. जुअराओ This is correct इति omitted. P. citation missing.

IX. 1. Ta. तत्रस्य for तस्य. P. तकारस्य.

X. Ta, Tb दौहृदेषु. 1. Ta Tb. एव्वनादेर्दस्य ल: स्यात्. P. एव्वनादौ. Either is correct. 2. Ta, Tb. omits संयुक्तोत्तर up to गन्तव्यम्. In Ta, after कळंबं a letter started and scored before दोहळं.

XI. In Malayalam गद्गद is written गत्गद and is pronounced *galgada*. All MSS. write गल्गद.

XII. Ta. संख्ययाश्च. 1. Ta, Tb. अनादेर्दस्य रेफ: स्यात्. 2. Ta, Tb. तेरह missing. 3. Ta. Tb. अनादे: किम. P. दिअहाइ. 3, 4. Ta. omits the citation. 4. P पीणत्थण तब्भणं. Ta, Tb. अयुक्तस्य किम्.

XIII. 1. Ta, Tb. अनादे: पकारस्य. Ta. वकारदेश: P. पस्य व: स्यात्. 2. Ta. gives कपोलं as *Chāyā* for कवाळं. 2 Tb. P. omits तावो. P. omits इत्यादिसर्वत्र. 3. Ta, Tb. अयुक्तस्य किम्. P. omits सप्पो and दप्पो. 4, 5. P. omits पंकअं and पावं 4. Tb. only संकपो. Ta, Tb. अनादे: किम्. 5. Ta. कगपादि Tb. सूत्रे for सूत्रेण. 6. Ta. व्यर्थमेव प ends a leaf and next leaf starts पकारस्य. 7. Ta. First written इत्यैस्यैव and, instead of

in स्यै, it is in स्यै that ऐ mark is scored. Tb. प्रवृत्तिरिति चेत्. P. इत्यनेनैव गतार्थत्वादिति चेत्. 8. Ta, Tb. तत्र तत्र. This is correct. 8, 9, 10. P. omits the whole passage from यत्र यत्र up to भूवो ळोवा इति, but has in its place तेन कआडं किआणो इत्याद्यपि साध्वेव. 9. Ta. gives the examples as भूवो भूलोपो ळोओ. Then only इत्या, and गणचादि follows; here क is added below the line before ग and ण is scored. Tb. gives लोपो as *Chāyā* for ळोओ. 10. Ta, Tb. omit इति.

XIV. 1. Ta. first written only आपेडशब्द; then ए mark inserted before ब्द below the line. P आपीडे य: पकार: Ta. आमळ. 2. Ta, Tb. P एनीळापीडेत्यादिन (आ in न omitted in Ta). P. omits उक्तमेव and the citation 3 Ta. कमवधे. Ta, Tb. omits भवति. P. omits अपि भवति.

XV. Ta, Tb, उत्तरीयानीयरोर्यो जो वा. P. only जी for ज्जो. 1. Ta. उत्तरीयशब्दे Ta, Tb P अनीयर्प्रत्यये च. P. वर्तमानस्य यस्य जकारो. Ta, Tb. तस्य जकारो 3, 4. P. omits the whole passage after करणीयम्.

XVI. 1, 2. P. has the passage as कस्तर्हि स्थानीति चेदुच्यते. 2. Ta, Tb. अन्त्याद्ययो: 3. Ta. after अतीव two letters written and scored and का follows. Ta, Tb. omit स्थानित्वम्. P. वकारस्यैव (omits इति) The reading should be either of these two. 4. Ta. Tb. P. कअंधं. This is correct. P. has this before the passage विधान etc. and begins the passage as अत्र विधान; P. omits अपि before न भवति.

XVII. 1. P. omits अयुक्तस्यानादे:; has टकारस्य डकारादेश:; omits भडो. 2. P. omits णडो P. अयुक्तस्येत्येव. Ta, Tb. अणादे: for अना-देरिति. (both have णा for ना). 2, 3. P. अनादावित्येव. 3. Ta. भको for टंको P. टं missing, space left.

XVIII. 1. Ta. Tb. omits सढा.

XIX. 1. Ta. Tb. P. फळिहं. In the citation. Ta. Tb. P. omit निकष. 2 Ta, Tb. कस्य ह उक्त: P. only ह: for ककारस्य हकार:

XX. 1. Ta. P. अस्य for डस्य. Tb. omits अस्य च. Ta. omits वीळा but gives its *Chāyā*. Tb. omits पीळा. P. gives कीळा and another, which can be वीळा or पीळा. No. *Chāyā*; so cannot be

determined. In Malayalam व and प cannot be distinguished in writing. 4. Ta, Tb अनादेरित्येव.

XXI. 1. P अनादौ वर्तमानस्य Ta ष्ट for ष्ट. 2. P. omits कढिणं and कढोरो. Ta, Tb अयुक्तस्य किम् Ta, Tb. णिट्ठुरं. 3. P. अनादाविति किम्. 3. Ta, Tb P. ठक्कारो.

XXII. Ta, Tb ठस्य. 2. Ta. after उक्त there was written स्म, which is crossed and विस्म follows Ta, Tb अंकोळ्ळ. P अक्कोळं.

XXIII. Ta, Tb. only स्पष्टं for passage ending with भः स्यात्. 2. Ta, Tb. another example सभरो. P अयुक्तस्येति किम्. P. अनादाविति किम्. 3. Ta. Tb. फेरवो for फेखो P only one example फालम्.

XXIV. Ta, Tb. तत्राघोषस्य. 1. P. हकारस्य Tb. first तादृशेनैव तकारेण; then त scored and थ written below it. P. तादृशेन फकारेणैव. 2. Tb. तस्य हः स्यात्. Then त scored and थ written below it. Ta. थस्य हः स्यात्. 3 P omits किमर्थमिदमुच्यते. 4. Tb omits न सेत्स्यति. Ta. first सेत्स्येति, then ए mark in त्स्ये scored 5. Ta. यथादिषु थस्य. 6. Tb. After केच्चि some letter written and scored and तुन्तर follows. P. गतार्थमिति सूत्रमिदं 7 Ta. Tb. यथादय एवप्रायः (only प्रायः and not प्रायाः) P. omits the whole passage.

XXV. Tb. First omits घ and inserts it below line between थ and भां. 1. Ta. अयुक्तानादीनामेषां हः स्यात् बहुलम्. 2. Ta. करणं for कहणं P. omits कहणं Ta, Tb. omits कहा. 3. P. omits विहू. Ta, Tb. omits विहवा. Ta. Tb. अयुक्तस्येति किम्. 4, 5. Ta, Tb. omit अनादाविति किम्. 5. Ta, Tb. घडेइ. This is correct. 6. Ta. सुबिनक्खं. Ta. Tb. have the following more सभअं, बाधा, बाहा.

XXVI. 1. Ta, Tb. P. पढमं सिढिळं (Tb. has सिड्ढिलं). 2. P शिथिलढळ्ळादेशश्चेष्यते. Tb. first written ढिळ्ळे. Then the *Anusvāra* mark before ळे below line to mark its doubling.

XXVII. 1 Ta, Tb. omit अत्र. Ta. After देत्या a letter started and scored and दित्वात् follows.

XXVIII. 1. Ta. After रेफस्य a letter started and scored and ल; स्यात् follows. Ta, Tb. P. अत्पृथिवीत्यादिना. 1, 2. P. only अतं for

